अत्रनैश्चनियमैरपि ॥ लभ्यते यत्फलं सम्यक् तत्तस्य श्रवणाद्भवेत् ३६ यस्तच्छ्रावयेद्विद्वान् विष्णुभक्ति
परायणः ॥ तीर्थाभिगामी धर्मात्मा पूजयेत्तं प्रयत्नवान् ३७ वस्त्रालंकरणाद्यैश्च दक्षिणाभिः प्रतोषये
त् ॥ तस्मिन् संतोषिते विप्रे प्रयच्छंते मनोरथाः ३८ ॥छ॥ इति श्रीमत्स्यपुराणे प्रयागमाहात्म्ये द्वादशोध्यायः १२

॥श्रीकाशीविश्वनाथपुरीमेंमहल्लाछोटकीपिअरीपरबाबूकोलेश्वरसिंहकेमकानमेंबाबूकिशुनदयालसिंहकेगनेसप्रभाकरछापाखानेमेंप्रयागमाहात्म्यछापागया जिसकोलेनाहोयसोनईसडकपरबाबूकोलेश्वरसिंहकेदुकानपरमीलैगा सोधावलशास्त्रीप्रभुणेनेबहुतशुद्धतापूर्वक ली॰ द्वारकातिवारी सम्वत् १९४३ माघकृ॰१३

॥श्रीगणेशायनमः॥सूतउवाच॥एकदासुखमासीनंरेवायाःपुलिनेभृगुं॥मुनयोविनयोपेताःपप्रच्छु
र्लोमशादयः॥१॥मुनयऊचुः॥भगवन्सर्वतत्त्वज्ञतत्त्वंयत्तवनिश्चितं॥निर्वाणपरिनिर्माणकारणंमुक्ति
कांक्षिणां॥२॥यद्रहस्यंचवेदानांतेनिःकृष्यविविच्यच॥ब्रूहिनःश्रद्धयोपेतान्करुणालययत्त्वतः॥३॥
वयंहिमाययामुग्धानिश्चयंनलभामहे॥सूतउवाच॥एवंपृष्टः४सभगवान्भृगुस्तत्त्वार्थदर्शनः॥यदुवा
चतदाख्यामिशृणुध्वंसुसमाहिताः॥भृगुरुवाच॥साधुसाधुमहाभागाःसाधुसाधुतपोधनाः॥भवद्भि
र्यदहंपृष्टस्तत्त्वंतत्त्वविवित्सया॥तत्त्वंज्ञातुंकथयितुंयाथातथ्येनपद्मजः॥भूयसासमयेनापिनालंभव
तितत्त्वतः॥तदहंचयथापूर्वंश्रुतवानस्मितत्त्वतः॥तथाकिंचित्प्रवक्ष्यामिनमस्कृत्यस्वयंभुवे॥उपक्र
मोयंसुमहाननुत्तरस्यतपोधनाः॥शंभो४स्मरणमेवैकंसहायंप्राप्यचारभे॥९॥अत्रेतिहासंसुमहांतमद्भु
तंमनोमलक्षालनशीलमादिमं॥शृणुध्वमंतःकरणादिनिश्चलंविधायमेधाभिविवृद्धिसाधनं॥१०॥क
ल्पांतेसूर्यचंद्रादिविनाशेसमुपस्थिते॥पृथिव्यादिमहाभूतेतष्टेचसतिसर्वतः॥११॥गुणसाम्येसमापन्ने

न्नेमायया श्रीपतेः पुनः ॥ गते बहुतिथे काले सर्गोन्मुखतया विभोः ॥१२॥ पचेलिमायां प्रकृतौ साशयायां
तदात्मनः ॥ व्योमाभवत्ततो वायुस्ततस्तेजो जलं ततः ॥१३॥ जलाङ्कुरं भवत्तानि क्रमेणाधिकतामियुः ॥ एवं
क्रमेण भूतानि सृष्ट्वा सर्वेश्वरः प्रभुः ॥१४॥ भक्तानुग्रहमान्यार्थं लीलादेहमधारयत् ॥ इंदीवरदलश्यामं
चतुर्बाहुं स्वलंकृतं ॥१५॥ पद्मनेत्रं पद्मनाभं पद्मारिदरधारिणं ॥ जलांतर्गतमुद्रासि पीतांबरसमावृतं ॥
१६॥ तस्य नाभ्यां सरसिजं तरुणादित्यवर्चसं ॥ शतयोजनविस्तीर्णं ततो जायत पद्मजः ॥१७॥ चतुर्मुख
श्चतुर्दिक्षु न ददर्श च कंचन ॥ तदा मेने स्वमात्मानं भूतेशं भूतभावनं ॥१८॥ अहंकारगृहीतात्मा विष्णुना
भिसरोजजः ॥ एवमज्ञानसंभूतं विज्ञाय भगवान्हरिः ॥१९॥ स्वरूपं दर्शयामास कोसीति द्रुहिणं ब्रुवन्
॥ ब्रह्मोवाच ॥ अहं भूतेश्वरः साक्षाद्भवतः कारणं परं ॥२०॥ सर्वमेतन्मया सृष्टं किं मां वेत्सि न तत्त्वतः ॥ नारा
यण उवाच ॥ अहो अविद्यामाहात्म्यमयं मन्नाभिपद्मजः ॥२१॥ ईश्वरं मां न जानाति विरिंचिर्मदमूढधीः
पद्मयोने पश्य हेतुं स्वीयं मन्नाभिपंकजं ॥२२॥ दृष्ट्वा पश्चान्निजगुरुं मामेव शरणं व्रज ॥ भृगुरुवाच ॥ एवं

नौविविदंतौ हि परस्परममर्षणौ ॥२३॥ अहं पूर्वमहं पूर्वमिति वाग्युद्धमीयतुः ॥ संरब्धावथवान्योन्यैरस्त्रा
नुभावसमुत्थितैः ॥२४॥ अस्त्रैः शस्त्रैस्ततः ख्यातैः क्षतजोक्षितपुद्गलौ ॥ हरिद्रुहिणयोरेवं युध्यतोः शतवत्स
राः ॥२५॥ अतीतानानयोर्मध्ये पराजीयत कश्चन ॥ अपश्यतामथाभ्याशे लिंगं तेजोमयं परं ॥२६॥ शर
च्चंद्रायुतसमं प्रभाभासुरमैश्वरं ॥ वीक्ष्य तद्व्यापकं ज्योतिर्निःप्रभौ विस्मितौ च तौ ॥२७॥ कर्त्तव्यं नान्वपद्येता
मीषदागतसाध्वसौ ॥ किंचिदग्रे महाज्योतिः किंचिदग्रे स्थितं कुतः ॥२८॥ तर्कयंतौ विधिहरी ददृशाते तदं
तरा ॥ पुरुषं पिंगजटिलं दिग्वाससमलंकृतं ॥२९॥ भुजगैर्नृकपालैश्च कुंदेंदुविमलद्युतिं ॥ तं दृष्ट्वाथ त
योरासीदयमेव परः पुमान् ॥ इति बुद्धिस्ततस्ताभ्यां संस्तुतो वैदिकैः स्तवैः ॥३०॥ महादेव उवाच ॥ भवद्भ्या
मिदमुद्भासि मल्लिंगं दृष्टमद्भुतं ॥ स्तुतं च तेन प्रीतोहं वृणीतां वरमादिजौ ॥३१॥ तावूचतुः ॥ सदाशिव प्रस
न्नश्चेत्त्वमिनौ निश्चलामतिः ॥ सदा भवतु भूतेश वरं नान्यं वृणीमहे ॥३२॥ एकं परां कुरु विभो संशयं नौ
हृदि स्थितं ॥ यद्भवांस्तेजसं लिंगमधितिष्ठति निस्पृशः ॥३३॥ तत्किं समाख्यं किंरूपं किंप्रभावं किमाश्रयं

॥एतत्सर्वं महेशान वक्तुमर्हस्यशेषतः॥३४॥ महादेव उवाच॥ यदेतत्परमं लिंगं पश्यसि त्वं पुरतः स्फुरत्
॥ तद्विश्वेश्वरसंज्ञं हि सच्चिदानंदविग्रहं॥३५॥ लयं लिंगशरीरस्य विशेषं गमयेत्परं॥ तेन लिंगमिति
ख्यातं मम पवर्गैकसाधनं॥३६॥ व्यापकत्वेपि चैतस्य निर्विकारस्य तत्त्वतः ॥ परिच्छिन्नप्रभावर्धिर्नमः
यानच विष्णुना॥३७॥ यथाव्योमापरिच्छिन्नं शब्दहेतुतया समं॥ स्वयमेव परिच्छिन्नं प्राप्नोतीदमपीदृशं
॥३८॥ प्रभावः श्रूयतामस्य नित्यानंदस्वरूपिणः॥ अत्र त्यक्तासवः संतः सच्चिदानंदरूपतां॥३९॥ यथायो
ग्यं लभंते हि नात्र कार्या विचारणा॥ अत्र प्रविष्टमात्रस्य जंतोः ~पापं पुरार्जितं॥४०॥ विनाशमाप्नोति परं पु
ण्यराशिश्च वर्द्धते॥ निर्वाणपदमेवैतद्धितिष्ठामि नित्यशः॥४१॥ म्रियमाणस्य जंतोर्हि वाक्यं कर्णे समु
च्चरन्॥ विना वाक्योपदेशेन ब्रह्मात्मैक्यं न भासते॥४२॥ ब्रह्मात्मैकत्वविज्ञानादृते मुक्तिर्न जायते॥ नियमेनेे
ह कश्चित्तदहं यस्य कस्यचित्॥४३॥ स्वे स्वे कर्मणि निष्णातानुत्तमानथ मध्यमान्॥ अधमानप्यमार्गस्था
न्नयामीह परां गतिं॥४४॥ पंडितो वापि मूर्खो वा मूर्खजो वा तथांत्यजः॥ अस्मिं ल्लिंगे त्यजन्प्राणान्धर्मेण

दानीमेव बाधंते क्षुत्पिपासादयो ग्रहाः ॥ मुखं च ते ति विम्लानं न तथा मेऽस्ति भूपते ॥ आप्यापि महतीमृद्धिं न प
त्वया सुकृतं कृतं ॥६९॥ नीतः कालो वृथा राजन्काममात्रोपसेवया ॥ धर्मार्थौ यः परित्यज्य काममात्रं प्रसे
वते ॥७०॥ भवानिव स दुःखार्तः परिभ्रमति संकुलं ॥ भृगुरुवाच ॥ इत्यंगनावचः शृण्वन्क्षुधितः सपिपा
सितः ॥ न किंचित्प्रत्युवाचैनां स्वपराधं विचिंतयन् ॥ दंपती तौ वने भीमे भ्रमंतौ क्षुत्तृषार्दितौ ॥७३॥ पंच
भिर्दिवसैः प्राप्तौ शालंकायनमाश्रमं ॥ पूजितस्तेन विधिवत्फलमूलजलादिभिः ॥७४॥ उवास तत्र निःशं
कः कथितस्वार्तिसाधनः ॥ एकां रात्रिं तत्र नीत्वा पुनर्वभ्राम तद्वने ॥७५॥ तया मृगदृशा सार्धं दिनानि सुब
हून्यपि ॥ कुकर्मपरिपाकेन नैवाप फलादिकं ॥७६॥ विशुष्यद्वदनो राज्ञीसहितो विंध्यकानने ॥ तदा
तस्याभवद्बुद्धिः क्रूरा पापस्य राक्षसी ॥७७॥ भक्षणाय विभावर्यास्तदा सा तद्धनाशनी ॥ अब्रवीच्च तदा
साध्वी भूरिदुःखं गतव्यथा ॥७८॥ विभावर्युवाच ॥ राजेंद्र क्षुधया तेऽद्य पीडा प्राणविजानता ॥ लक्ष्यते तेन म
द्गात्रान्मांसमुत्कृत्य भक्षय ॥७९॥ माविलंबं कुरु विभो न मे दुःखं भविष्यति ॥ स्त्रीणामतः परो धर्मो नास्त्येव पृ

थिवीपतेः॥८०॥ भर्तुर्येनोपकारः स्यात्तत्कार्यमविशंकया॥ अत्रापि गाथां गायंति ये पुराणविदो जनाः॥८१
॥ आपदर्थे धनं रक्षेत् दारान्रक्षेद्धनैरपि॥ आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥८२॥ भृगुरुवाच॥ इत्येवंवा
दिनीं तां तु जघानतरसा बली॥ हत्वा भक्षीतु मारेभे प्रियामांसं स पापकृत्॥८३॥ तदैव सिंहाः खेलंतस्त
त्राजग्मुरितस्ततः॥ तान्दृष्ट्वा तद्धि हायाशु प्रायात्प्राण परीप्सया॥८४॥ पलायमानः सहसा योजनानंत
रं द्विजान्॥ चतुरो पश्यदव्यग्रानीवारान्नृत्यगच्छतः॥८५॥ वेदवेदांगसंपन्नान्ब्रह्मचारिव्रते स्थिता
न्॥ दृष्ट्वैव खड्गमुद्यम्यन्यवधीत्तान्स किल्विषी॥८६॥ हत्वा नीवारकान्भोक्तुमुपविष्टः स कानने॥ उप
वीतानि ददृशे तेषां साजिनकानि च॥८७॥ दृष्ट्वा ब्राह्मण्यसंपन्नान्ब्रह्महत्या भयार्दितः॥ पपात भूमौ दुःखे
न किं कृतं मेति निंदितं॥८८॥ विशस्ता ब्राह्मणा ह्येते हता भार्या पतिव्रता॥ प्राण लोभेन महता कृतं निःकृ
ति वर्जितं॥८९॥ एक ब्राह्मण विच्छेदो नरकाप्रापयेत्परान्॥ यावत्कल्पशतं पूर्णं स्त्रीघातश्च तदर्धकं॥
॥९०॥ चत्वारो ब्राह्मणाः शस्ता एका स्त्री च पतिव्रता॥ एकाधिकं शतं पूर्वं मयासह यमालये॥९१॥ निरये

षु पतिष्यंति पतिताएव नेथवा॥ अतः परं मया किंचित्तथा कार्यं विजानता॥ ९२॥ यश्चैतत्तापमतुलं तूर्णं व
द्रस्म साङ्गवेन्॥ भृगुरुवाच॥ भूरिद्युम्नो विचार्यैवं भ्रमंस्तत्रैव कानने॥ ९३॥ शालंकायनजं विप्रमपश्यत्त्वा
श्रमस्थितं॥ दूरे स्थित्वाभिवाद्यैनं कथयामास दुःखितः॥ यद्वृत्तं तत्समाकर्ण्य स मुनिर्दुःखितोभवत्॥ ९४
गच्छेतः पापबुद्धे त्वं नात्र स्थेयं कथं चन॥ इत्युक्त्वा स मुनिस्तस्मात्स रागास्यो भवत्पुनः॥ ९५॥ भूरिद्युम्नो
पितमृषिं पुनः पुनरपृच्छत॥ स्वयं कृतस्य पापस्य निःकृतिं विलपन्बहु॥ ९६॥ तस्यैवं पृच्छतः श्रुत्वा दी
नवाक्यं दयानिधिः॥ विमृश्योवाच राजानं शालंकायनजो मुनिः॥ ९७॥ शालंकायन उवाच॥ काशीं गच्छ
महाराज सर्वपापापनोदिनीं॥ तां प्राप्य सकलं पापं स्पपयिष्यसि सर्वदा॥ ९८॥ मत्ययार्थं च राजेंद्र नीलीनि
चयसंभवान्॥ अनिशं कंचुकान्पंच परिधत्स्व परंतप॥ ९९॥ आ काशीदर्शनात्ते हि द्रष्टव्याश्चेंद्रसन्नि
भाः॥ कंचुका हि यदा नैल्यं जह्युः काशीविलोकनात्॥ १००॥ तदा त्वं नत्स्व कलुषं क्षपितं वेत्सि तत्त्वतः।
भृगुरुवाच॥ इति श्रुत्वा वचस्तस्य भूरिद्युम्नो विधायतत्॥ १०१॥ जगाम काशीं विप्रेंद्रा नत्वा तं मुनिपुंगवं।

ससप्तदिवसैः काशीमपश्यदुष्टमानसः ॥ २ ॥ स्फुरुचिरभवनेनविश्वभर्तुर्मणिमयकुट्टिमचंचदंशुजा

लैः ॥ रविकरनिकरप्रभाभिभूतिंविरचयतारचितांनितांतरम्यां ॥ ३ ॥ कलिमलकुलकालकालराजक्षपितनि

वासिजनांतरापजालां ॥ हरवृषभपिनत्धकिंकिणीनांक्कणमुखरीकृतदिव्यदिग्विभागां ॥ ४ ॥ भवभयप

रिभीतिनाशहेतुंसुरनरकिन्नरसेवितांसमंतात् ॥ विविधलिंगसमर्चनतत्परैः शिवशिवेतिमुहुः प्रतिजल्प

नैः ॥ ५ ॥ वदनवाद्यविधानतत्परैः सरसालककदंबकोटिवृक्षैः ॥ कुसुमनिचयभारनम्रशाखैरधिकतरंसुतरांविरा

जयंती ॥ ६ ॥ दुरितविलोपिगतपापगणोभवतिक्षणंसमवलोकयतः ॥ सददर्शतांहरपुरींपरितः परिवा

रितायनिकरांप्रमथैः ॥ ७ ॥ भृगुरुवाच ॥ अहोकाशीमहिमानंपश्यतद्विजसत्तमाः ॥ भूरिघ्नोपियांदृष्ट्वा

शरच्चंद्रांबरोभवत् ॥ ८ ॥ विवेशकाशींनिःपापः पूजयामासचेश्वरं ॥ महादेवंविधानेनप्रतीतोनैत्यनाः

शनात् ॥ ९ ॥ वसंस्तत्रमहाभागः कालेकालमुपेयिवान् ॥ शिवोपदिष्टवाक्यःसन्लेभेब्रह्मैकतांद्विजाः ॥ १०

एवमन्येपिबहवोमुक्ताः काशीनिषेवणात् ॥ काश्यांपरित्यजन्प्राणान्परित्यजतिसंसृतिं ॥ ११ ॥ पापरूम्भि

यतेकाश्यांयदि भ्राक्पुण्यगौरवात्॥ नजातुनरकंयाति कल्पकथाधर्मतत्परे॥१२॥ भूमौजनैनंतरिक्षेवा यत्रवापि
मृतोद्विजाः॥ ब्रह्मात्मैकत्वमाप्नोति काशी शक्तिरूपाहिता॥१३॥ काशीतिवर्णद्वितयंस्मरन्त्यजतिपुद्गलं॥
यत्रक्वापिभवेत्तस्य कैलासेवसतिःसतः॥१४॥ अत्रैवोदाहरंतीममितिहासंपुरातनं॥ आसीत्पुराकुरुक्षेत्रे
भालुकेस्तनयःकृशः॥१५॥ अधर्मनिरतोनित्यंपिंगाख्यश्रमकेलिकृत्॥ कृशस्यपिंगनेत्रस्तस्यांगवेदंम
द्दिष्टवान्॥१६॥ तथापिधर्मेनप्रीतिंचकारकुलपांसनः॥ भालुकिःपिंगनेत्रश्चधर्मतस्मैसमूचतुः॥१७॥ वे
दंपुराणंनीतिंचश्रावयामासतुस्तदा॥ तथापिनैवधर्मात्मामतिंधर्मेसमादधे॥१८॥ ततःकालेनतारुण्यं
प्राप्तःसुंदरविग्रहः॥ मातुःसपत्नींसंनीतिंगुरुपत्नींचहैमनीं॥१९॥ उभेनीत्वास्ववशगेजगाममथुरांपु
रीं॥ ताभ्यांक्रीडन्सदुष्टात्मासुष्ठान्स्वर्णानिभूभुजां॥२०॥ मदिरादिरसास्वादलंपटःसमपद्यत॥ एवंद्वा
दशवर्षाणिमतानितस्यक्रीडतः॥२१॥ अथतेनिधनंप्राप्तेगुरुपत्न्यौक्रमेणतु॥ सोपिदुःखाकुलोगच्छन्कलिंगं
प्रतिचभ्रमन्॥२२॥ कलिंगदेशेतीव्रेणज्वरेणार्त्तोभवत्कृशः॥ पीडितश्चिंतयामासकिंकर्मसुकृतंकृतं॥ २३॥

स्वकल्मषाणि संस्मृत्य कलिंगे वीक्ष्य च स्थितिं ॥ परलोकं न सुखदं स्वस्या द्राक्षी द्विचारयन् ॥२४॥ श्रुत का
शीकथः पूर्वं सस्मार किल काशीकां ॥ काशीति द्व्यक्षरं मंत्रमुच्चरन्विजहावसून् ॥२५॥ यमदूतास्तदा क्रूरा
बबंधुर्मालुकेः सुतं ॥ अथाजग्मुः शिवगणास्त्रिशूलोद्धतपाणयः ॥२६॥ विमानमादाय परं तरुणादित्यव
र्चसं ॥ दिव्यांगनाभिरध्यस्तं चलच्चामरपाणिभिः ॥२७॥ तान्दृष्ट्वा यमदूतास्ते रुरुशस्योचुकुकर्मनत् ॥ यमदूता
उचुः ॥ अयं पापसमाचारो यथा वह्निर्दितो ह्यिवः ॥ अमुं नेतुं कथं प्राप्ता यूयं धर्मिजनप्रियाः ॥ शिवगणा ऊ
चुः ॥ यद्यप्ययं दुराचारः सर्वदेवभृटाः कृशः ॥ तथाप्येते तु काशीति काशीनामसमुक्तवान् ॥ तेनास्य दु
रितं क्षीणं कैलासे स्थाप्यसे युगं ॥ ततः पुनः सुपुण्यात्मा काश्यां मुक्तिमवाप्स्यति ॥ भृगुरुवाच ॥ एवमुक्त्वा
शिवगणाः कृशं नीत्वा ययुः शिवं ॥३१॥ यमदूतास्वराजानं सर्वमुचुस्तदादितः ॥ समाकर्ण्य ततो वाक्यं दू
तानां तानुवाच ह ॥३२॥ यम उवाच ॥ प्राणप्रयाणावसरे ये काश्यां संगता नराः ॥ ये वा काशीति भाषंते ये वा
विष्णुपरायणाः ॥३३॥ ये वा महादेवरता ये वा सत्तीर्थमृत्यवः ॥ तेषां नाहं प्रभुः क्वापि त्याज्यास्तु भिरेवते ॥३४॥

भृगुरुवाच॥ इत्थंतपोधनाःकाश्यामाहात्म्यंप्रोक्तवाहनं॥ यच्छ्रुत्वापिविलीयंतेपापानिसुमहांत्यपि॥३६॥
॥ इतिश्रीपद्मपुराणेपातालखंडेकाशीमाहात्म्येप्रथमोध्यायः॥१॥ ॥ सूतउवाच॥ कथयित्वाकथामेतांसभृगुर्भृगुनंदनाः॥पुनःप्रोवाचमाहात्म्यंवाराणस्याविशेषतः॥१॥ भृगुरुवाच॥ शृणुध्वंभोमुनिःश्रेष्ठाःपुनःकाशीकथांशुभां॥ यांश्रुत्वासंशयंजत्यःसकलंमुक्तिसाधने॥२॥काश्यांयोगोनदुःप्रापःकाश्यांमुक्तिर्नदुर्लभा॥ततोनिशंनिषेवतकाशींमोक्षात्त येजनः॥३॥गणयतिनकथंचिच्छंकरःकाशिकायामयमिहममभक्तोब्राह्मणःपुल्कसोवा॥ उपदिशतिसदांतेवाक्यमेकात्मनिष्ठंद्विजकुलनिरपेक्षोभाव्यतत्राधिकारः॥४॥ केवलंधर्मसापेक्षःकर्णेजपतितद्वचः॥अधर्मिष्टस्यतत्क्षेत्रेपातनांनेदिशेन्मतिं॥५॥काश्यांकृतस्यपापस्यभोगोरुद्रपिशाचता॥एकैकस्यचपापस्यसमानामयुतत्रयं॥६॥तस्मात्पापंनकर्तव्यंमनसापिविभोःपुरे॥ येकाश्यांधर्मभूयिष्टानिवसंतिमुनीश्वराः॥७॥तेनारयंतिचात्मानंशतपूर्वान्शतापरान्॥ काशींप्रतिप्रस्थितानांजनानांपापकर्मणां॥८॥घूर्णतेसर्वपापानिसर्वधातुगतान्यपि॥का

श्यामुद्दिश्य यातानां सर्वस्यात्म मयः शुभः ॥ ९ ॥ मंगलं सकलं वस्तु न तत्किंचिद्विचारयेत् ॥ देवाः सर्वे भवेयु
र्वै प्रतिबंधकराः परं ॥ १० ॥ तानुपेक्ष्यैव गंतव्या काशी मुक्ति प्रकाशिका ॥ काश्यपो ये निजधर्मेण मुमुक्षुस्तिष्ठ
ति द्विजाः ॥ ११ ॥ अनायासाविलंबाभ्यां स एव फलमश्नुते ॥ ये का— श्यां संश्रयाविष्टा मुक्तौ तेषां शरीरिणां ॥
॥ १२ ॥ प्राणप्रयाणसमये प्रमाणं परमेश्वरः ॥ तत्र स्वल्पं हुतं दत्तं जप्तं तप्तं द्विजोत्तमाः ॥ १३ ॥ भूयादनंतफल
दं तत्क्षेत्रस्य प्रभावतः ॥ यत्र देवनदी गंगा यत्र सा मणिकर्णिका ॥ १४ ॥ किं चित्रं तत्र विप्रेंद्रा मुक्तिर्या तौ तनूभृ
तां ॥ तत्क्षेत्रं ये भिपद्यंति धीराः श्रद्धोपेता धर्ममार्गैकनिष्ठाः ॥ ॥ १५ ॥ लभंति ते देहसंत्यागमात्रादात्मं
ज्ञानं निष्कलप्राप्तहेतुं ॥ अविमुक्तं न विमुंचेत्कथंचित्सत्त्वं सत्यं कथयामीह विप्राः ॥ १६ ॥ संसारं च विरसं भावयि
त्वा — देहांतं तत्र तिष्ठत्सुनीतः ॥ ब्रह्मात्मैक्यं द्योतकं तत्र वाक्यं महादेवस्तारकं ज्ञानहेतुं ॥ १७ ॥ कर्णेज
पत्यनिशं चांतकाले कस्तां काशीं मनसा हातुमिच्छेत् ॥ १८ ॥ मुनय ऊचुः ॥ इत्थं मुक्तिप्रदायिन्यां सत्यां का
श्यां भृगो भुवि ॥ ऋषयो मुनयश्चान्ये किमर्थं मुक्तिसाधने ॥ १९ ॥ क्लिश्यंति श्रवणे ध्याने मनने वीतकल्मषाः

॥दं मे नः संशयं छिंधि भगवन्मुनिपुंगव॥२०॥ भृगुरुवाच॥ श्रूयतां मुनिशार्दूला यत्तद्वस्यामि तत्त्वतः॥ संशयो ने
ह कर्तव्यो युष्माभिर्धर्मबुद्धिभिः॥२१॥ विचित्ररुचयो लोका बहुश्रद्धाः क्वचित्क्वचित्॥ यथेष्टं हि विचेष्टंते स्व
तंत्रास्तत्र तत्र हि॥२२॥ वर्णाश्रमपरिप्राप्तधर्मानुष्ठानको विधिः॥ नित्यो नैमित्तिकः काम्यः काम्यस्तु स्वेच्छया
भवेत्॥२३॥ अनेकोपायलभ्यं हि फलं भवति ब्राह्मणाः॥ प्रवृत्तिः स्वेच्छया तत्र सर्वलोके हि दृश्यते॥२४॥ यथा क
श्चित्स्वसूनार्थी समानासु लतासु च॥ समानश्रमगम्यासु समानकुसुमासु च॥२५॥ विद्यया नासु कस्यांचित्प्र
वर्तेत न सर्वतः॥ तथा लोका यथाकामं श्रयंते मुक्तिसाधनं॥२६॥ समानवर्णगोक्षीरं तुल्यपात्रप्रतिष्ठितं॥ यु
गपन्नैव गृह्येत किंचित्पूर्वं हि गृह्यते॥२७॥ तद्वन्निर्वाणहेतूनां बाहुल्येपि मुमुक्षुभिः॥ सुशक्यत्वेन यज्ज्ञातं तन्नि
त्यं तैस्तन्निषेव्यते॥२८॥ अन्यच्च श्रूयतां काश्या माहात्म्यं मुनिपुंगवाः॥ वामदेवेन यत्प्रोक्तं वसिष्ठं प्रति सादरं॥२९
॥ आस्ते सरस्वतीतीरे वसिष्ठस्याश्रमः परः॥ तत्र जगाम तत्त्वज्ञो वामदेवो यदृच्छया॥३०॥ पूजितः स यथान्यायं
वसिष्ठेन प्रयत्नतः॥ दत्तानि फलमूलानि तस्मै धर्मविवृद्धये॥३१॥ वामदेवोपि तं सर्वं प्रतिजग्राह भक्तितः॥ ततो

पविष्टौ तौ विप्रौ कथयामास नुः कथां ॥ ३२ ॥ वेदाश्रयां विचित्रार्थां धर्ममोक्षोपयोगिनीं ॥ तदा पप्रच्छ विनयाद्वसि
ष्ठो मुक्तिसाधनं ॥ ३३ ॥ वसिष्ठ उवाच ॥ वामदेवात्मतत्त्वज्ञ ब्रह्मज्ञानैकसाधनं ॥ विनासाधनसंपत्त्या यद्यस्ति व
द तन्मम ॥ ३४ ॥ वामदेव उवाच ॥ कथं वसिष्ठ वेदोक्तसाधनेन विना भवेत् ॥ ब्रह्मात्मैकत्वविज्ञानं नहि दीपं वि
ना प्रभा ॥ ३५ ॥ तथापि विद्यते ब्रह्मज्ञानं ल्यायासेन सत्वरं ॥ तादृशज्ञानफलदं शंभोः क्षेत्रं महात्मनः ॥ ३६ ॥ वाराण
सीति विख्यातं त्रिषु लोकेषु राजते ॥ आदिमध्यावसाने न स्थानं विश्वेशधिष्ठितं ॥ तत्र स्थितस्य जंतोर्हि भोगः
मोक्षप्रदः शिवः ॥ उपपातकिनश्चैव महापातकिनश्च ये ॥ ३८ ॥ तेषां तत्क्षेत्रमाहात्म्याद्यानि क्षयमाप्नुयुः ॥ मा
रुतेरित काशीस्थरेणुयोगेन किल्बिषं ॥ ३९ ॥ दूरीभवति विप्रर्षे नात्र कार्या विचारणा ॥ स्वधर्मनिरतस्यैव
हीनस्याप्युत्तमस्य च ॥ ४० ॥ समानागतिरुद्दिष्टा वाराणस्याः प्रभावतः ॥ अनंतकाननं तद्धि शंकरस्याति व
ल्लभं ॥ ४१ ॥ न विमुंचति विश्वात्मा अविमुक्तं नतः स्मृतं ॥ काश्यां तिष्ठंति ये केचित्तान्पश्यंति सुरोत्तमाः ॥ चतुर्भु
जांस्त्रिनयनांश्चंद्रोद्भासितशेखरान् ॥ दानं तत्रानंतफलं प्रदिष्टं स्नानेन हृत्तत्र जप्यादि कर्म ॥ ४२ ॥ एवं पापं तत्र

यदर्जितं स्यात्तद्व्ययनेनंनात्रसंदिग्धमस्ति॥ द्विजंस्वधर्मनिरतं योवर्षाशनदानतः॥ स्थापयेच्छ्रद्धयायुक्तस्तस्य पुण्यफलंशृणु॥ यावत्यःसिकताःसंतिगंगायांमुनिसत्तम॥४५॥ तावद्वर्षसहस्राणिक्रीडेदिंद्रेणसंगतः॥पश्चा दत्रमहाराजोजायतेनिर्मलेकुले॥४६॥ दीर्घायुर्बहुपुत्रश्चसुखीशंकरभक्तिमान्॥ अंतेचलभतेकाशींततो निर्वाणमाप्नुयात्॥४७॥ अश्वत्थंपिचुमंदंचसहकारमथोलतां॥ योरोपयतियत्नेनतस्याप्येतत्फलंभवेत्॥ ॥४८॥ संत्यनेकानितीर्थानिपृथिव्यांमुनिसत्तम॥ तथापिजंतुनाकाशीसेव्यासर्वप्रयत्नतः॥४९॥ न्यायागतंधनं काश्यांस्वल्पमप्यग्रजेर्पितं॥ भवेदनंतफलदंनित्यंनह्यत्रवासिनि॥५०॥ एवंप्रभावाविप्रर्षेविद्यतेकाशिकापुरी ॥एहिपश्यावहेगत्वातामुमाकांतपालितां॥५१॥ भृगुरुवाच॥ वसिष्ठस्तेनमुनिनावामदेवेननोदितः॥ भ क्तिजंस्वाश्रमेकृत्वाकाशीमभिमुखोययौ॥५२॥ पथितौप्रद्वयोपेतौवीतरागौगतक्लमौ॥ वसिष्ठवामदेवौतुजग्मतुःशांकरींपुरीं॥५३॥ व्रजंतौतौमहारण्येदृष्टवंतौनिशाचरान्॥ करालान्सायुधान्दृप्तान्मालिवंशसमुद्भवान्॥५४॥ तेषांमध्येहुंडुकाख्यंमालिनःपौत्रसंभवं॥ ददृशातेमहात्मानौक्रूरंसुरविमर्दनं॥५५॥ तेनदृष्टौ

च्चतौमार्गेकौभवंताविति स्फुटं॥ अन्योन्यंनामकथयांबभूवतुरुपप्लुतौ॥ ५६॥ हुंडुकस्त्वंवसिष्ठाख्यंविज्ञायो
वाचतंप्रति॥ हुंडुकउवाच॥ अहोमिष्टंमयाप्राप्तंचिरस्यरजनीचराः॥ वध्यतामेषदुष्टात्मावसिष्ठःसहमि
त्रकः॥ ५७॥ एतस्यैत्रेणसहसामत्पितासहबांधवः॥ पराशरेणनिहतःसत्रेराक्षसघातके॥ ५८॥ भृगुरुवाच॥ इ
तिश्रुत्वावचस्तस्यसर्वेतदनुयायिनः॥ वसिष्ठवामदेवौतुबंधुंसमुपचक्रमुः॥ ५९॥ तावन्योन्यंनिरीक्ष्यंतौश
क्तावपिनिवारणे॥ गतरोषतयानैवकिमर्थंकुरुतांतदा॥ ६०॥ निर्विकारौनिर्विशंकौदृढबंधौविरेजतुः॥ इंद्र
जिन्मुक्तनागास्त्रबद्धाविवरघूद्वहौ॥ ६१॥ हुंडुकःखड्गमादायहंतुमेवाकरोन्मतिं॥ अथाब्रवीद्वामदेवोव
सिष्ठंप्रतिसादरं॥ ६२॥ वामदेवउवाच॥ वसिष्ठपश्यप्रतिबंधमावयोर्वाराणसीसंगतयेहिगच्छतोः॥ श्रेयोहि
निर्विघ्नमवाप्यतेपरंभवंतिदेवाअपिविघ्नकारकाः॥ ६३॥ प्राणानयंनेष्यतिहुंडुकाख्योननत्वरंदुःखमिवाव
भासते॥ विलोचनाभ्यांयदुमेशपूःपुरीनवीक्षितातत्किरुदूयतेमनः॥ ६४॥ मनोरथोयंममतेपिचस्थितःका
श्यांगमिष्यावइतिद्विजोत्तम॥ सुधांशुमौलेश्चरणौनिरंतरंद्रक्ष्यावहेसोपिनसिद्धिमीयिवान्॥ ६५॥ भृगुरु

वाच॥ ब्रह्मर्षिरेवमुक्त्वा स वामदेवो मुनीश्वरः॥ दध्यौ शंकरमेवांतर्वसिष्ठस्य धराश्रितौ॥६६॥ स तु पापसमा
चारो हुंडुको राक्षसेश्वरः॥ खड्गमुद्यम्य युगपत्तौ जग्राह जटांतरे॥ यदैव तेन तौ मौर्व्या गृहीतौ मुनिसत्तमौ॥
॥६७॥ तदैव प्रादुरासीत्तु त्रिपुरांतकरो हरः॥ क्रोधोद्धूतकटाक्षेण कालानलविलासिना॥६८॥ भस्मावशेषान
करोद्राक्षसान्स हुंडुकान्॥ पाशांश्छित्वा तयोः शंभुस्तत्रैवांतरधीयत॥६९॥ अथ तावुत्थितौ पार्श्वे भस्मराशि
मपश्यतां॥ नान्यं कंचन तौ वीक्ष्य शंभुमेवान्वपश्यतां॥ एवं विस्मयमापन्नौ तौ मुनी मुनिसत्तमौ॥७०॥ ययतुः
काशिकामेव विदीर्णप्रतिबंधनौ॥ चिरकालेततः काशीं दृष्ट्वा तेतिविस्मितौ॥७१॥ लसद्बकुलचंपकप्रचयचा
रुशाखाशिफानितांतमधुलुंपटध्वनिविशेषसंनादितां॥ रसालसुरसोत्कटस्फुटफलप्रतानावृते स्वनस्त
रभृतारवैर्मुखरितांतराभाबुकैः॥७२॥ सचकितमृगीयूथैर्दिक्षु प्रकीर्णविलोचनैर्मुखपुटगृहीतार्धप्रोद्यद्य
वांकुरबंधुरैः॥ विमुखविसरपूथाधीशप्रभावविनाशिभिर्विहितजनतामोदादेवैः सदैव निषेवितां॥७३॥ बि
ल्वभूरिह कोमलच्छदशंभुपूजनतत्परैः कुशकाशपुष्पसमृद्धिराजितफुल्लपाणिसरोरुहैः॥ वेदवेदितकर्म

कांडविधाननिश्चलमानसैर्मुनिभिर्द्विजैः परैश्च सेवितां भवभेदिनीं ॥७४॥ पद्मोत्पलकुलोल्लासिसमीरण
हृतश्रमां ॥ कदलीकांडसंदोहचलद्दलविराजितां ॥७५॥ भागीरथीसमुत्क्षिप्ततरंगालिंगितामिव ॥ वाराण
सीं तौ पश्यंतौ विश्वस्य नयनोत्सवां ॥७६॥ अवापतुर्मुदं विप्रौ दंडवच्च प्रणेमतुः ॥ नत्वाथ तां पुरीं प्रीतावंतर्गे
हस्य पूर्वतः ॥७७॥ त्रिंशद्वर्षसहस्राणि तेपाते परमं तपः ॥ तयोस्तु तपसा तुष्टः कपर्दी तावथाब्रवीत् ॥७८
॥ विश्वनाथ उवाच ॥ वरं वृणीतां मुनिपौ गुरुवर्यो यो मनोगतः ॥ तं प्रयच्छामि संतुष्टो यद्यपि स्यात्सुदुर्लभः ॥
॥७९॥ तावूचतुः ॥ वरं चेद्दित्ससि विभो तदा त्वद्भवने स्थितिं ॥ अचलां च मतिं देहि नान्यस्मिन्नौ वरेर्थिता ॥८०॥
विश्वनाथ उवाच ॥ भवंतावत्र मत्त्रितौ तिष्ठेतां मुनिसत्तमौ ॥ काशीवासिजनाघौघनाशकौ दर्शनेन च ॥८१
॥ भवतोर्दर्शनं कुर्याद्यः स विघ्नविनाशकृत् ॥ स्वधर्मनिरतस्तिष्ठेत्स ततं मत्परायणः ॥ भृगुरुवाच ॥ इति द
त्वा तयोः शंभुर्वरं ब्रह्मैक्यचित्तयोः ॥ अभूदंतर्हितस्तत्र काश्यां मुक्त्यैकसाधने ॥८३॥ इत्येतद्वः समाख्या
तं काशीमाहात्म्यमुत्तमं ॥ वामदेवेन यत्प्रोक्तं वसिष्ठं प्रति सादरं ॥८४॥ य एतच्छृणुयान्नित्यं पठेद्वापि प्रयत्नतः

॥८५॥ संवादं मुक्तिमार्गस्थं वामदेववसिष्ठयोः॥ लभते स विना विघ्नं काशीवासं निरंतरं॥८६॥ मुनय ऊचुः॥
भगवन्यन्निगदितं शंभुना विश्वयोनिना॥ स्वधर्मनिरतस्तिष्ठेदिति तद्दूदं तत्त्वतः॥८७॥ धर्मात्मा लभते मोक्षं मो
क्षं पापः पिशाचतां॥ त्वया प्येतन्निगदितं तत्र नः संशयो महान्॥ पापात्मा किं पिशाचत्वं प्राप्नुयात्सथमं परं॥
अथवान्यत्र नरके पतेत्पूर्वं ततस्त्वतां॥ एतन्नि स्तारतो ब्रूहि तत्त्ववित्त्वं मतो हि नः॥८९॥ भृगुरुवाच॥ क्षणं कु
रुत भद्रं वो वदामीह यदाश्रुतं॥ काश्यां कृतस्य पापस्य फलं पश्यत्सुदारुणं॥९०॥ वाराणस्यां मृतः पापो ना
पैति यमयातनां॥ नियंता भैरवस्तस्य कालकालः कपालभृत्॥ अहो बत भृशं तीव्रा भीमा भैरवयातना॥ का
श्यां कृतेन पापेन यद्दुःखं समवाप्यते॥९२॥ अंतकोपि न तद्दुःखं तादृशं चार्पितुं क्षमः॥ अत्राप्युदाहरंतीम
मितिहासं पुरातनं॥ यच्छ्रुत्वैव न कस्यापि काश्यां पापे द्यमो भवेत्॥ आसीत्क्रमेलको नाम शूद्रः काशीपुरे
पुरा॥९४॥ धर्मात्मा द्विजभक्तश्च दयावाननसूयकः॥ प्रियातिथिश्च सततं धनवान्धर्मवत्सलः॥९५॥ तस्य
भार्याश्च पुत्राश्च सर्वे धर्मैकवत्सलाः॥ यथोक्तातिथिवारेण नत्तीर्थे निवेषणं॥९६॥ तत्र लिंगार्चनं भक्त्या

चक्रे तत्र क्रमेलकः॥ इत्थं निवसतस्तस्य वर्षाणि सुबहून्यपि॥९७॥ व्यतीयुर्धर्मनिष्ठस्य न चासीत्कलु
षा मतिः॥ कालक्रमेण तत्रैको विप्रो वेदविचक्षणः॥९८॥ भागुरिः समुपागच्छन्निवासाय विभोः पुरे॥ स तु
क्रमेलकगृहं जगामातिबुभुक्षितः॥९९॥ तस्य द्वारि समासीनो याचते स्म विनीतवत्॥ क्रमेलकस्ततो दृ
ष्ट्वा पूर्वपापनियंत्रितः॥१००॥ भर्त्सयामास मेदात्मा भागुरिं ब्राह्मणोत्तमं॥ स तु निर्भर्त्स्यमानोपि पुनः पुनर
याचत॥१॥ क्रमेलकस्तु कोपात्स्मे ताडयामास पाणिना॥ भागुरिः स्कुथयाविष्टस्ताडितेनिर्ययौ ततः॥२॥ तु
लाधारं ददर्शाग्रे प्रार्थयामास तं तदा॥ तेनातिसत्कृतः कामं बभूव मुदितो द्विजः॥३॥ अथ कालेन महता व्या
धिग्रस्तो बभूव सः॥ तत्याजासून्स शिवक्षेत्रे मणिकर्णिजलाश्रितः॥४॥ तं देवविकटा भीमा भैरवस्य गणा
स्त्रयः॥ पाशैर्बबंधुरुल्लेखू दूं निन्युर्भैरवसन्निधौ॥५॥ तं दृष्ट्वा भैरवः क्रोधादुवाच प्रज्वलन्निव॥ भैरव उवाच॥
अयं पापसमाचारः कुकर्मकरणोद्यतः॥६॥ यथाक्रमं यातनासु दूताः शीघ्रं नियुज्यतां॥ भृगुरुवाच॥ भै
रवाज्ञां समाकर्ण्य यातनासु न्ययुंजत॥ क्रमेलकस्तु भूषाभुध्यातो वर्षसहस्रकं॥ तावत्कालं हृदे शीते

बुभुजे दुःखमुत्कटं॥८॥ततोनिर्जलनिर्भक्षः कृमिर्देहधरोभवत्॥ तत्रैव सारमेयोभूद्गलन्मांसः सुदुःखि
तः॥त्रिंशत्त्रिंशत्समाः पश्चात्तावत्कालंगतोभवत्॥ततः संकीर्णयोनीतिशरीराणिव्यधारयत्॥१०॥अ
थभूद्द्विशरीरं स द्धेतत्रकमेलकः॥ततोभैरवदूतैस्तैः स नीतो भैरवाग्रतः॥११॥कालभैरवदृष्ट्यैवरुद्रपैशा
चमाप्तवान्॥त्रिंशद्वर्षसहस्राणि क्षुत्तृषाभ्यां विशोषितः॥१२॥ ततोमुंक्षीणकलुषं शंकरस्तारकं वचः॥श्रा
वयामास विधिवत्संपाद्याधिकृतिं परां॥१३॥तेनमुक्तिं परानंदरूपां प्रापसुदुर्लभां॥इत्युक्तं सकलं विप्रायथा
काशीकृताहसां॥१४॥दुस्तरायातनाघोराकिमन्यच्छ्रोतुमर्हथ॥मुनयऊचुः॥विचित्रमिदमाख्यातं भृगो
सर्वर्षिसत्तम॥परं यदुक्तं देहांश्च नानाद्धेक्रमेलकः॥१५॥तन्मोहयतिचेतांसि अस्माकं संशयं दधत्॥पुरा
श्रुतमिहास्माभिर्वाराणस्यां मृतोजनः॥१६॥महापापोपिनाप्नोति पुनर्जन्मविडंबनं॥अन्यथैवाधुनाप्रोक्तं क्र
मेलककथांतरं॥१७॥ इमं नः संशयं छिंधि सर्वतात्पर्यविद्भवान्॥१८॥भृगुरुवाच॥भवद्भिः संशयोनात्रवि
धेयोमुनिसत्तमाः॥रहस्यमिवं वक्ष्यामि संशयच्छेदसाधनं॥१९॥यद्यसापं काशिकायाममवाप्तं स्थूलोत्कृष्टं

ज्ञानतोऽज्ञानतोवा॥ तत्तद्भोगप्रापणायैव देहाअयोनिजाभैरवेच्छाविधानाः॥२०॥ उच्चावचायातनैकप्रधाना
विद्यंतेतानेतिकाशीकृताघः॥ यथायाम्येहि नरके यातनादुःखभागिनः॥ अयोनिजा तादेहास्फस्तद्वत्रा
वधार्यतां॥२१॥ तस्मात्काश्यां पातकं नैव कुर्यात्स्थूलोत्कृष्टंयातनाभोगदायि॥ कुर्वन्भुंक्तेरुद्रपैशाच्यमुग्रं
सुदारुणंचापिदुःखप्रयुक्तं॥२२॥ ऋषयऊचुः॥ भगवन्सत्वरंमुक्तिः काश्यामेव निवासिनां॥ दुर्लभैवावभा
सेतुपापंकेवानकुर्वते॥ भृगुरुवाच॥२३॥ सत्यमुक्तंधर्मरताः पापंप्रायोनुजायते॥ तथापिकिंचित्पापंहिकाश्या
मेवकृतंद्विजाः॥२४॥ गंगादितीर्थस्नानेश्वलिंगानांचसमर्चनैः॥ विनाशमाप्नोतिपुनर्यदज्ञानादुपार्जितं॥
॥२५॥ स्वल्पंज्ञानादपिकृतंविश्वेशस्यसमर्चनात्॥ नश्यत्येवनसंदेहो भूयस्तदनुपार्जनात्॥२६॥ उप
पातकसंपत्तिर्महापातकसंगमः॥ कालभैरवनिर्दिष्टांयातनांप्राप्नुयात्परां॥२७॥ स्थूलंयोदुरितंकाश्यांस
त्वान्यत्रमृतोभवेत्॥ सकल्पकोटिभिस्तस्यपापस्यांतंनगच्छति॥ २८॥ सूक्ष्मपापविनाशायनित्ययात्रा
विधिर्भवेत्॥ गंगायामाप्लुतिःप्रातर्मध्याह्ने मणिकर्णिकां॥२९॥ निषेवेतसदापश्चाल्लिंगंविश्वेश्वरंव्रजेत्॥

भवानींढुंढिराजंचदंडपाणिंचभैरवं॥३०॥पूजयेन्नित्यशःकाश्यांसूक्ष्मपापाभिभूतये॥भृगुरुवाच॥एवं यात्रापरस्तत्रयस्तिष्ठेद्विजसत्तमाः॥३१॥स्वधर्मनिरतस्तस्यसत्वरंमुक्तिरीरिता॥१३२॥ ॥इतिपद्मपुराणेपातालखंडेकाशीमाहात्म्येद्वितीयोध्यायः॥ २॥ ॥मुनयऊचुः॥ अहोतिरम्यंपुरवैरिणःपुरंसुरापगानीरकणोघशीतलं॥धराधराधीशस्तावधीरितस्वधर्मनिष्ठोर्जितकिल्बिषोच्चयं॥१॥वाराणस्यास्तुमहिमाकर्णामृतरसःपरः॥श्रूयमाणःपुनरपिशुश्रूषांनःसमर्द्धति॥२॥भूयोवदविशेषेणकाशीमाहात्म्यमुत्तमं॥भृगुरुवाच॥आकर्णयंतुमुनयोमाहात्म्यंकाशिकाश्रयं॥३॥श्रद्दधानाःस्थिरधियोविचिकित्साविवर्जिताः॥अत्राप्युदाहरंतीममितिहासंपुरातनं॥४॥आसीन्महीपतिःपूर्वंसुपर्वारथपृथपः॥क्षात्रधर्मेरतोनित्यंवलीपुरपुरंजयः॥५॥द्वादशाक्षौहिणीनाथःसोमवंशयशस्करः॥सकदाचिद्वनंयातोमृगयाकृष्ट मानसः॥६॥स्वल्पैरनुचरैःसार्धमारुत्यजविनंहयं॥शरासनोत्सृष्टशरैःशितैःशोणितभोजनैः॥७॥हरिणान्हरिणीसक्तानवधीच्चसहस्रशः॥वराहान्महिषान्विध्यंश्चचारगहनेवने॥८॥सोश्वेन

जविनानीतोवनादन्यहृतंमहत्॥ चाराःपराग्वृत्त्यगता अपश्यंतोनराधिपं॥९॥ रूपवर्मानुवनेन्यस्मिन्
ददर्शसरउत्तमं॥ प्रस्यग्रपंकजमुखंवसितकैरवाग्रंहंसीनिनादमधुरंविधुरंमलेन॥ मत्तभ्रमद्भ्रमरराज्य
लकंमनोज्ञंकामोत्सुकंनिजकलत्रमिवप्रसन्नं॥१०॥ ततोऽकेलिनिरतांचटुलायताक्षीं क्षामोदरीं रति
मिवापरदेहमाप्तां॥ युक्तांसखीभिरभितोमितमध्यदेशांतारुण्यघूर्णितकटाक्षशरान् क्षिपंतीं॥११॥ हा
रावलीललितनव्यपयोधराग्रांपीयूषभानुवदनांस्त्रियमैक्षतेति॥ दृष्ट्वा रूपवर्मामुदितः पप्रच्छविनयेनसः
स्त्रियोहिदर्शनादेवमोहयंतिद्रुतंनरं॥१२॥ सुपर्वोवाच॥ कात्वंभवसिकल्याणिशरदिंदुनिभानने॥ सुरी
वाकिन्नरीनागी अधिष्ठात्रीवनस्यवा॥१३॥ तद्ब्रूहिचंचलापांगिश्रोतुमर्हावयंयदि॥ स्त्र्युवाच॥ अहं वि
शालराजस्यदुहितारिपुभेदिनः॥१४॥ अनूढास्मिमहाबाहोत्वमामुद्वहमाचिरं॥ रूपवर्मोवाच॥ अवै
मित्वांवरारोहेनोढांकेनापिसुंदरी॥१५॥ तथापितवपित्रैवदत्तांगृह्णामिनान्यथा॥ नचात्मनःप्रभुःकन्या
दानेपितरिजीवति॥१६॥ तथाविशालराजोमेत्वांप्रयच्छतुधर्मतः॥ स्त्र्युवाच॥ विशालराजोधर्मेणन

तुभ्यं मां प्रदास्यति ॥१७॥ प्रतिज्ञां स्वकृतां रक्षन्स्तत्र धर्मव्यवस्थितः ॥ सुपर्वोवाच ॥ का प्रतिज्ञा विशाल-
स्य किमर्थं केन वा कृता ॥१८॥ वद सर्वं यथातथ्यं ततो हं त्वत्कृते यते ॥ स्त्र्युवाच ॥ अस्ति वाराणसी नाम नग-
री गिरिजापतेः ॥१९॥ अपवर्गफलप्राप्तिसाधनं देवदुर्लभा ॥ तत्र कुंडधरः श्रीमान् प्रभूतबलवाहनः ॥२०॥
राजा वसति धर्मात्मा तेनाहं प्रार्थिता पुरा ॥ विशालं प्रति नैवायं सकामं समवाप्तवान् ॥२१॥ मुहुर्मुहुः प्रार्थयते
स राजा न मत्पिता मामदद्याच्च तस्मै ॥ ततो विशालं प्रति काशिराजः पुरोहितं दुर्वचनानि वक्तुं ॥२२॥ प्रस्था-
पयामास पुरोहितो पि विशालमाश्रावयदुग्रवर्णं ॥ पुरोहित उवाच ॥ शृणु राजन्प्रवक्ष्यामि यत्त्वां कुंडधरो
ब्रवीत् ॥२३॥ प्रार्थिता हि मया कन्या त्वदीया चंद्रिकाभिधा ॥ त्वया न दत्ता क्षुद्रेण तेनाहं त्वां सबांधवं ॥२४॥
निहत्य तरसा नेष्ये चंद्रिकां तव दारिकां ॥२५॥ इति श्रुत्वा मम पिता पुरोहितमथाब्रवीत् ॥ वदेथा विप्र ते पापं
दुष्टं कुंडधरं प्रति ॥२६॥ न दास्ये चंद्रिकां तुभ्यं न चेदन्यं वरं लभे ॥ अनूढैव सुता सैवं स्थास्यते बहुलाः समाः
॥२७॥ यदि दास्यामि कस्मैचित्तदा त्वां सगणं रणे ॥ हत्वा काश्यामुपागत्य दास्याम्येतन्न मे मृषा ॥२८॥

इत्याख्याप्यविशालस्तं प्रेषयामास सत्वरं॥ अनेन हेतुना वैरं तयोरस्ति निरंतरं॥ २९॥ तुल्यत्वाद्बलयो राज्ञो नैक
स्यापि पराजयः॥ यदायदैव संग्रामो जायते स्म महांस्तयोः॥ ३०॥ तदा तदा तुल्यभावो दृश्यते नाधिकोऽधमः
॥ अत उक्तं मया राजन् पिता मे न प्रदास्यति॥ ३१॥ अनुगृह्णीष्व नारीणामाधिज्ञोसि विशेषितः॥ भृगुरुवाच
॥ एवमुक्तः सुपर्वा तु तया चंद्रिकया वने॥ ३२॥ न जग्राह वचस्तस्यास्तामुवाच स सांत्वयन्॥ आगच्छ तन्वि
गच्छामो विशालं पितरं तव॥ ३३॥ तं दृष्ट्वा यद्भवेद्युक्तं तत्करिष्यामि यत्नतः॥ इत्युक्त्वा तु तया सार्धं विशालं
समुपेयिवान्॥ ३४॥ विशालोपि च तं ज्ञात्वा सुपर्वाणं नराधिपं॥ पूजयामास विधिवत्स प्रच्छागमनेऽर्थितां
॥ ३५॥ विशाल उवाच॥ सुपर्वन् राजशार्दूल सनाथो भवता कृतः॥ इहागमनहेतुं त्वं ब्रूहि येनासि संगतः॥
॥ ३६॥ सुपर्वोवाच॥ चंद्रिका तव पुत्रीयं वने विचरता मया॥ दृष्टा तां याचितुं प्राप्तो देहि मे विधिवत्सुतां॥ ३७
॥ विशाल उवाच॥ भवत्समः क्षितौ नास्ति वरः कोपि नराधिप॥ तुभ्यमेव प्रदेयेयं वाराणस्यां सुता मया
॥ ३८॥ हत्वा कुंडधरं पापं सहामात्यं सबांधवं॥ दास्यामि काश्यां कन्यां च प्रतिज्ञेयं मम मातुला॥ ३९॥

भवतैवसहायेनहत्वा कुंडधरंशठं॥ भवतेचंद्रिकांदास्यामितिमेनिश्चितामतिः॥५०॥ रूपवेवाच॥ चंद्रि
कांमेप्रयच्छाशुविशालजगतीपते॥ अहंपुनःकुंडधरंसूदयिष्यामितत्क्षणात्॥५१॥ विशालउवाच॥ कं
न्यादानंकरिष्यामिकाश्यामेवनचान्यथा॥ अद्यैवागच्छतत्रत्वंचंद्रिकोद्वहनंकुरु॥५२॥ रूपवेवाच॥
वाराणस्यांकिमाधिक्यंपश्यसित्वंजनाधिप॥ येनतत्रसुतादानंयत्नात्कर्तुंसमुद्यतः॥५३॥ विशालउ
उवाच॥ सुपर्वन्काशिसामर्थ्यंवक्तुंवेदानहिक्षमाः॥ धर्मस्त्वनुष्ठितःपुंसामनंतफलदोभवेत्॥५४॥ काशी
वासीश्वपुल्कशःपुल्कसोवाश्रेष्ठोराजन्मुक्तिकन्यावृतोयत्॥ अन्यत्रस्थःसार्वभौमःस्वधर्मीनस्याच्छ्रेष्ठोग
र्भभावैकयोग्यः॥५५॥ अविमुक्तंनमुंचंतिमुनयःशास्त्रचिंतकाः॥ संसारसागरोत्तुंगतरंगासंगभीतयः
॥५६॥ अविमुक्तेतुयस्तिष्ठेदाकलेवरपातनात्॥ तंविश्वेशोत्रजीवंतंमृतंचपरिरक्षति॥५७॥ काशीवासंक
र्तुकामोयदिस्याद्दूरस्थोपिब्राह्मणंधर्मनिष्ठं॥ तदानानावस्त्रभोज्यादिदत्वाश्रद्धायुक्तःसर्वदावासयी
त॥५८॥ वाराणस्यांवासयन्ब्राह्मणाग्र्यंदेवोच्छिंद्याद्दुष्टसंसारबंधं॥ तस्मादत्रस्थापनीयाःप्रयत्नाद्द्विजाराज

न्नूरमेनापिमुक्तये॥४९॥सुपर्वन्नमणिकर्णिक्यांस्नात्वा विश्वेश्वरस्तु यैः॥ सकृद्दृष्टोन वैतेषांगर्भवासस्य संभ
वः॥५०॥गंगोदग्वाहिनीं पुण्यांतीर्थकोटिशतैर्वृतां॥निषेवेतमहीपालसततंपापहारिणीं॥५१॥ अव्याकृतज
लादेवीकाश्यांवसतिजान्हवी॥संपादयतिक्षेत्रस्यशोभंजातिभसूनजां॥५२॥ सर्वदेवाःसगंधर्वास्तत्रविश्वे
श्वरंप्रभुं॥उपासनेतुविधिवत्सर्वकर्मसमृद्धये॥५३॥ काश्यांश्वेतकिनापूर्वंभूपालेंद्रेणशंकरः॥सहस्रंव
त्सरान्शक्त्यातोषितःऋतुलब्धये॥५४॥ततःकैलासमवसद्भगवान्श्वेतकिन्नृपं॥तत्रापिसतपस्तो
पि संवत्सरशतंपरं॥५५॥महादेवस्ततःप्रीतोदुर्वाससमथादिशत्॥श्वेतकेर्यज्ञसिध्यर्थंसतयज्ञमका
रयत्॥५६॥एवंरूपासुपर्वन्साकाशीवाराणशीपुरी॥सिद्धिक्षेत्रंतपःक्षेत्रंमुक्तिक्षेत्रंपरंस्मृतं॥५७॥अ
तोहंचंद्रिकांतत्रतुभ्यंदास्यामिनान्यथा॥एवंज्ञात्वामहाबाहोकाश्यान्कुंडधरंनृपं॥५८॥जहिमसत्य
सबलमस्तिचेच्चंद्रिकार्थिता॥ भृगुरुवाच॥ ॥इतिश्रुत्वावचस्तस्यविशालस्यद्विजोत्तमाः॥५९॥सुपर्वा
तद्भीष्टंयत्मतिजज्ञेतदादरात्॥ अथदूतान्स्वदेशंससुपर्वाप्रेषयद्बहून्॥६०॥सेनानयनहेतोर्हिसेना

पतिं कृतत्वरान्॥ सुपर्वणः सैन्यपालं प्रियाश्वं रणदुर्मदं॥ ६१॥ ते गत्वा सर्वमूचुस्तत्स्तपं वचनं परं॥ तच्छ्रु
त्वा स्वामिनो वाक्यं प्रियाश्वः सत्वरं भटान्॥ ६२॥ निनाय तं सुपर्वाणं ह्यादशाक्षौहिणीस्तदा॥ स्वसैन्यं सर्व
मादाय विशाले नानुमोदितः॥ ६३॥ जगाम काशीं नरसाह्वं तुं कुंडधरं नृपं॥ विश्वलोपि स्वसैन्येन महता
परिवारितः॥ ६४॥ आदाय चंद्रिकां कन्यां ययौ दातुं सुपर्वणे॥ ततः कुंडधरः श्रीमान्न्यूनसैन्योपि रोषितः
॥ ६५॥ सन्नह्य तस्थौ तत्रैव समराकांक्षया बली॥ सुपर्वा यस्वसैन्येन रुरोध नगरं विभोः॥ ६६॥ भृशं कुंडध
रेंद्रं तं कृतचित्तः प्रतापवान्॥ एवं सैन्यसमावापे जाते देवाः सवासवाः॥ ६७॥ रणं निरीक्षितुं प्राप्ता अप्स
रोभिश्च सर्वशः॥ स्ववेश्यास्तत्र संप्राप्ता दृष्ट्वा देवेश्वरोब्रवीत्॥ ६८॥ पुरोहितं गुरुं तत्र काशीमहि विवत्स
या॥ इंद्र उवाच॥ ब्रह्मन्विमानानुगता बृहस्पते समागता अप्सरसो विशिष्टाः॥ रणोज्झिता सून्सुभटा
न्विनेतुं किं भावितन्मेवदसुद्धबुद्धे॥ ६९॥ गुरुरुवाच॥ आसामपांगागतरंगितानि अनंगसंदीपनसाध
नानि॥ मुनीशसंमोहनकारणानि रतिप्रियाण्यप्यलसेरितानि॥ ७०॥ अस्मिन्महादेवपुरे मृतेषु ये दे

षु शास्त्रोल्लिखितपातकेषु॥ मुधा भविष्यंति सुधांशुमौलिप्रदिष्टतत्त्वानुभवेषु शंके॥७१॥ एतास्त्वलब्धमरणा
पि पद्माः पद्मेक्षणाः कांचनचारुवर्णाः॥ लसद्विमानानि निजानि नीत्वा यास्यंति शून्यानि विशिष्टयोधैः॥
॥७२॥ शतक्रतोः शंभुपुरे मृतानां निर्वाणलक्ष्मीपरिसेवितानां॥ प्राप्तिः कथं स्याच्चपलाप्सरोभिः स्वपितृ
भोगान्कुलमानसाभिः॥७३॥ क्षेत्रे पवित्रे मृतिमागतानां ब्रह्मादिकीटांतशरीरभाजां॥ कर्णेजपत्वं स्मरतार
कारव्यं ततः परं ध्वस्तभवा भवंति॥७४॥ अन्यत्रापि प्रमीतानां श्राद्धं श्रत्यास मेधिनां॥ अत्रदीयेत तेन स्यान्ने
षां कैलाससंभवः॥७५॥ भगवन्भगवानीशो भवान्यासहितो निशं॥ अधितिष्ठति जंतूनां मुक्त्यै क्षेत्रमिदं परं॥
॥७६॥ अत्र संग्राममध्ये ये प्राणांस्त्यक्ष्यंति शस्त्रिणः॥ एतासां ते विषयगा न भविष्यंति वासव॥७७॥ बहु
नात्र किमुक्तेन दुर्ज्ञेया भवनेपि ते॥ सच्चिदानंदनिर्माय ब्रह्मभावं समागताः॥७८॥ भृगुरुवाच॥ इत्थं
श्रोवाच मधुरं गुरुः शतमुखं प्रति॥ ततइंद्रोप्सरोयूथं रुष्या श्रममयमन्यत॥७९॥ अथ कुंडधरस्यासीत्सै
न्येन सुपर्वणा॥ युत्संमाणहरं घोरं मांसशोणितकर्दमं॥८०॥ रथा रथैः समाजग्मुः पदाताश्च पदातिभिः॥ हयै

र्द्दपा गजैर्नागाः समं युद्धमवर्नत ॥ ८१॥ सैन्यं कुंडधरस्याशु क्षपइत्वा बलाद्बली ॥ जघान तं कुंडधरं सामा-
स्यं सकृतं क्षणात् ॥ ८२ ॥ अथ तस्य पदे स्थाप्य विशालं जगतीपतिं ॥ चंद्रिकामुपयेमे स पूजितस्तेन भूभु-
जा ॥ ८३ ॥ भृगुरुवाच ॥ इत्येतद्वो मयाख्यातं काशीमाहात्म्यमुत्तमं ॥ यत् श्रुत्वा पापसंघातं हंति पुण्य-
परो नरः ॥ ८४ ॥ अन्यच्च श्रूयतां विप्रा वाराणस्या गुणाश्रयं ॥ याज्ञवल्क्येन यत्प्रोक्तं जनकाय महात्मने ॥
॥ ८५ ॥ विदेहो जनको नाम मोक्षोपायं यथातथा ॥ याज्ञवल्क्यमुखाच्छ्रुत्वा विचिकित्साविवर्जितः ॥ ८६॥
बभूव परिपूर्णात्मा तत्त्वानुभवमाप्य च ॥ पूर्णोपि जन्मसंसारं दुःपारं वीक्ष्य दुःखितः ॥ ८७ ॥ याज्ञवल्क्य-
मुवाचेदं मोक्षवर्त्मप्रदेशकं ॥ जनक उवाच ॥ भगवन्सर्वजंतूनां येन मोक्षो विभाव्यते ॥ ८८ ॥ तद्ब्रूहि स-
र्वं तत्त्वज्ञ यद्यस्ति तव गोचरे ॥ यदुक्तं ब्रह्मनिष्ठेन भवोच्छेदस्य कारणं ॥ ८९ ॥ दुर्लभं तद्धि सर्वेषां मुनीना-
मपि किं पुनः ॥ अज्ञानां भोगलुब्धानां पराङ्मानृस्थचेतसां ॥ ९० ॥ याज्ञवल्क्य उवाच ॥ भद्रं वदसि राजें-
द्र दुर्लभं साधनं हि तत् ॥ मुनीनामपि सर्वेषां किं पुनर्लिप्तचेतसां ॥ ९१ ॥ एतत्साधनसंपत्तिं विना नास्ति भवस्य

यः॥ किं पुनस्तत्साधनं श्रीमत्प्राप्यते कुत्रचिन्नृप ॥९२॥ अस्ति वाराणसी नाम नगरी सा गरीयसी॥ तस्यां साधनसंपत्तिर्मोक्षश्च मरणाद्भवेत्॥९३॥ वाराणसीस्थतीर्थानामवगाहनतः परं॥ अंतःकरणसंशुद्धिं प्राप्नुयाद्विजितेंद्रियः॥९४॥ वैदेह तस्मिन्क्षेत्रे हि नित्यं सन्निहितो हरः॥ जंतूनामपवर्गाय गिरिजाप्राणवल्लभः॥९५॥ तस्य लिंगं तत्र भाति दिव्यं विश्वेश्वराभिधं॥ तस्य दर्शनमात्रेण तत्त्वज्ञानविधातकं॥९६॥ पापं क्षयमवाप्नोति नास्ति कोप्यत्र संशयः॥ रागद्वेषविनिर्मुक्ताः कामक्रोधविवर्जिताः॥९७॥ विश्वेश्वराभिधं लिंगं पश्यंति ज्ञानचक्षुषा॥ तडित्कोटिसमप्रख्यं कोटिचंद्रार्कसन्निभं॥९८॥ इंद्रियातीतममलं त्रैलोक्यव्यापकं परं॥ मोक्षायपन्नया प्रोक्तं निरवद्यं निरंजनं॥ यस्य भासा रविर्भाति चंद्रः पावक एव च॥९९॥ नक्षत्राणि ग्रहाश्चैव न तद्भासयते रविः॥ न पीयूषकरो नाग्निर्न तडिद्ग्रहतारकं॥ काश्यां विश्वेश्वराख्यं तल्लिंगं दृष्ट्वा विमुच्यते॥ ब्रह्मात्मकानि लिंगानि तत्र संति सहस्रशः॥१॥ तानि दृष्ट्वार्चयित्वा च मनःसिद्धिं समर्च्छति॥ वापीतत्रास्ति वैदेह चिन्मयी देवदक्षिणे॥ तद्पार्श्वे सेवनादेव भासते ब्रह्म केवलं॥ ऋषयो मुनयः सर्वे तत्रैवा

द्धिरेमनः॥३॥मोक्षंतुसुलभंमत्वामरवकर्मपराङ्मुखाः॥ततोब्रह्मपरिज्ञायकर्मोच्छित्तिंविचार्यचौं द
शाश्वमेधानाजन्हेतत्रैवशिवतुष्टये॥प्रीतोभवन्महादेवोवाजिमेधैःसुसंस्कृतैः॥५॥उवाचपद्मसं
भूतंकोवरोवांछितस्तव॥६॥ब्रह्मोवाच॥भगवन्देवताःसर्वायज्ञभागविवर्जिताः॥६॥क्षीणासत्वन्न
पृथिवीमभिवर्षतिपूर्ववत्॥वर्षाभावात्प्रजाःसर्वाःपीडयंतेहिबुभुक्षया॥ ७॥इत्थंत्रिलोकीप्रलयो
काडेत्रसमुपस्थितः॥तंविनाशंपरिहरश्रीकंठपरमेश्वर॥८॥ननश्येयुरिमेलोकास्तथानीतिर्विधायतां
॥वाराणस्यांतवक्षेत्रेवेदाध्ययनशालिनः॥मोक्षमेवकिलेच्छंतिविधिकर्मपराङ्मुखाः॥याज्ञवल्क्यउवा
च॥जनकेवंपद्मभुवाशंकरोयाचितस्तदा॥लोकानामुपकारार्थेचिरंचिंतापरोभवत्॥चिंतयित्वाब्रवीद्दे
वःप्रजापतिमिदंवचः॥शिवउवाच॥११॥मत्क्षेत्रमेववेदेतत्सर्वंतेमुक्तिकांक्षया॥विध्यनिष्ठानरहिता
ज्ञानमार्गेसमाश्रिताः॥१२॥किमत्रममसामर्थ्यमन्यथाकरणेविधेः॥नतावत्कालपर्यंतंकाश्यांरोगादि
संभवः॥१३॥नरागद्वेषलोभाश्चकार्परापभयानिच॥नपैशून्यंनकलहोलोलुपत्वंनवैक्षुधा॥१४॥नवि

काराभवंत्यत्रनशोकोविषयात्मकः॥ममविस्मरणेनैवनहरेर्नवृषस्यच॥१५॥सर्वेममप्रियकराधनै
र्देहैःप्रियैःसदा॥कथमेतान्स्मविश्वस्तान्मोहयामिविधेर्विधौ॥१६॥तथापिकिंचित्कर्तव्यंहितायस्व
निवासिनां॥आवयोर्वदतोःपूर्वंमृत्युःस्त्रीवेषरूपधृक्॥प्रादुरासीत्तवक्रोधात्त्वयामृत्योरितीरितं॥ते
नत्रस्तारुरोदोच्चैरावयोःपुरतःस्थिता॥तस्याअश्रूणिभवतापाणिभ्यांविधृतानिव॥तान्येवकल्पिता
निस्युर्लोकाप्युःस्वपणायवै॥१९॥कानिचिद्व्याधिरूपेणरागद्वेषादिभागशः॥अत्रतान्येवजंतूनांविघ्न
रूपेणपद्मज॥२०॥तिष्ठंतुसततंन्यूनंच्यावयंतुस्वधर्मतः॥अमुंविघ्नगणंराजन्परिभूयधृतव्रताः
॥२१॥येस्थास्यंतिममक्षेत्रेद्रुतंतेमुक्तिमाप्नुयुः॥ याज्ञवल्क्यउवाच॥एवंयदामहेशेनप्रजासंरक्षिणा
र्थिना॥२२॥स्वयंभुवाचोदितननियमःपरिकल्पितः॥तदेवराजन्सर्वेषांमुनीनामपिबुद्धिषु॥रागद्वेष
भयोद्वेगप्रमादालस्यकामिताः॥प्रादुरासन्समात्सर्यात्तत्त्वज्ञानविरोधिनः॥२४॥ततःकेचिद्द्रुतोद्विग्ना
वृथाभीताश्चकेचन॥तत्यजुःकाशिकांविप्राःकेचिद्द्रोहमथाचरन्॥२५॥अन्योन्यमात्सर्ययुताःकेलिप्रे

त्सुकबुद्धयः॥ बभूवुर्मुनयः केचित्केचित्कामपराभवन्॥२६॥ इत्थं व्याकुलिताः सर्वे संहत्योचुः परस्परं॥ त्यजे
म काशिकां सर्वे विघ्नाः संभवंतिहि॥२७॥ यद्यपीह सुलभ्यं तन्निर्वाणं मुनिसत्तमाः॥ तथापि रागद्वेषा
द्विर्बाधते मानसानि नः॥२८॥ रागादिषु प्रजातेषु पापमेव समेधते॥ अस्मिन्क्षेत्रे कृतं पापं स्वल्पं वापि म
हद्भवेत्॥२९॥ तस्मात्स्वकर्माणि करिष्यामो यथाविधि॥ अतः कारणमुध्यर्थं ततस्तत्त्वं स्फुरिष्यति॥
॥३०॥ विचार्यैवं गताः सर्वे मुनयः शंसितव्रताः॥ वाराणसीं विहायैव मुनयः शंसितव्रताः॥३१॥ त
स्माज्जनकभूपाल काश्यां निर्वाणसंसदि॥ सुलभापि मुहुः प्राप्ता विघ्नव्याकुलितात्मभिः॥३२॥ मुक्तिः
संसारगहनं बंधनात्पृथिवीपते॥ अन्यदत्र प्रवक्ष्यामि अविमुक्तं प्रति प्रभो॥३३॥ आदित्याद्यन्मया
ज्ञातं श्रूयतामवधानतः॥ आम्नायाध्ययनायाहं विवस्वंतं विभाकरं॥३४॥ उपतिष्ठामि सततं त्रै
लोक्याभासकं रविं॥ तं कदाचिदुपागच्छच्छशांकधवलद्युतिः॥३५॥ नारदो ब्रह्मणः पुत्रो विपंचीमनु
नादयन्॥ यथावत्तं समभ्यर्च्य चंडभानुरपृच्छत॥३६॥ कुत आगच्छसि मुने किं वाहं करवाणि ते॥ इ

निपृष्टःसदेवर्षिरब्रवीद्दिवसेश्वरं॥३७॥ नारदउवाच॥ अतएवाहमायातःप्रष्टुंत्वांविश्वभावन॥ निश्चि
त्यवदतत्वेनसर्वांतरसिभास्कर॥३८॥ गोमेधेसंगताविप्रामहत्तस्यमहीपतेः॥ गोमेधेसंगताविप्राःक
थांचक्रुर्मनोरमां॥३९॥ कथाप्रसंगान्निर्वाणसाधनानांकथाभवत्॥ तत्रसर्वैर्शिवक्षेत्रंकाशीतियन्नि
गद्यते॥४०॥ तदेवप्रशशंसुर्हिभूयोभूयोविमुक्तये॥ तदामेसंशयोभानोबभूवमनसिस्थितः॥४१॥ किंका
श्येवपुरीमुक्त्यैविष्णुभक्तिरपिप्रभुः॥ पुष्करादीनितीर्थानिकिन्नानिर्वाणहेतवः॥४२॥ क्षेत्राणिकिं कुरु
क्षेत्रप्रभृतीनिनमुक्तये॥ इतिमेसंशयोभानोछिंधिमेनुग्रहोयदि॥४३॥ सूर्यउवाच॥ संशयोनत्वयाका
र्योदेवर्षेक्वापिकर्हिचित्॥ लोकद्वयपरिभ्रष्टःसंशयात्माविनश्यति॥४४॥ तीर्थांतराणिक्षेत्राणिविष्णुभ
क्तिश्चनारद॥ अंतःकरणसंशुद्धिंजनयंतिनसंशयः॥४५॥ तारागस्यपिदेवर्षेताद्दश्येवपरंनुसा॥ प्रका
शयतिब्रह्मैक्यंतारकस्योपदेशतः॥४६॥ अन्यत्रास्वकृतोधर्मःसाधनानिकृतानिच॥ अत्रकाश्येवसा
हाय्यकर्त्रीकाशप्रकाशिनी॥४७॥ धर्मैन्यूनाधिकेकिंचित्सा[illegible]र[illegible]लितत्सतां॥ सुहृदांपापभीरूणामनि

त्यस्कराविहिषां॥४८॥ अनेनैव विशेषेण तां प्रशंसंति नास्तिकाः॥ सा साक्षाद्वाराणसी मुक्त्यै विष्णुभक्तिस्तथाविधा॥४९॥ तथापि विष्णुभक्तिस्तैर्दृष्टैरेव विभाव्यते॥ मनुष्यैर्धनदारेषु स्नेहातिशयवर्जितैः॥५०॥ धनं येषां प्रियकरं कथं ते षां हरिः प्रियः॥ हर्यर्थं नव्ययी कुर्यादिति भक्तिः सुदुर्लभा॥५१॥ काशी तु तिर्यग्भूतानामपि साधारणी मता॥ परं तु रागाकुलमानसानां नृणां परद्रोहविधानभाजां॥५२॥ वाराणसी निवृत्त्यै न साक्षाद्यस्त्वेते स्वीकृतकिल्बिषत्वं॥ काश्यां कृतेन पापेन यातना मतिभीषणा॥५३॥ प्राप्य पश्चाद्धि मुच्यंते क्षीणकल्मषशालिनः॥ विधेर्हरविरंच्यैवमुक्त्वा नारदं प्रति॥५४॥ अतः साधारणत्वेन जंतूनामपि मुक्तये॥ जिज्ञासितं पद्भव तातन्मया परिकीर्तितः॥५५॥ भृगुरुवाच॥ एवं प्रभावा सा देवी विनायासेन मुक्तिदा॥ प्रोक्ता मया मुनिःश्रेष्ठा भूयः किं कथयामि वः॥५६॥ इति पद्मपुराणे पातालखंडे काशीमाहात्म्ये तृतीयोध्यायः॥३॥ ऋषय ऊचुः॥ भगवन्सर्वतत्वज्ञ त्वन्मुखेंदुसुधारसं॥ पायं पायमपि ब्रह्मन्नूनं तृप्यामो निरंतरं॥१॥ भूयः कथय काश्यास्त्वं महिमानं महामते॥ सूत उवाच॥ इति पृष्टः पुनर्विप्रैः स भृगुर्भृगुनंदनः॥२॥ कथया

मासभूयोपिचित्रांवाराणसीकथां॥ भृगुरुवाच॥ आकर्णयंतुमुनयःशिवराजधानीमाहात्म्यमुज्झितभ
वप्रियमुच्यमनं॥ यस्यावधारणवशेनपरेशपुर्यांभक्तिःसमुल्लसतिसंस्मृतिनाशहेतुः॥३॥ आसीत्पुरा
भूमिभुजांवरिष्ठःशिष्टप्रियःसुवदनाभिधउग्रतेजाः॥ काश्यांनिरंतरितशंकरशंकरार्चाव्यग्रोपलब्धिरति
थिप्रियपालनज्ञः॥४॥ सर्वस्वदक्षिणमुपाहरदध्वरंतंयंवैदिकंविधिषुविश्वजितंवदंति॥ तंद्रष्टुमेवमुनि
काननकैरवेंदुर्ब्रह्मात्मजःसमगमन्मुनयःकुमारः॥५॥ आलोक्यपूजनममुष्यचकारराजाहेतुंतथागमन
साधनमन्वपृच्छत्॥६॥ राजोवाच॥ ब्रह्मैकतानभवदागमनेनमेसोयज्ञःसमुज्वलनिजांगयुतोद्यजातः॥
प्राप्स्याम्यनेनविधिनाविहितेननित्यंदुःप्रापमन्यपुरुषैःसुरराज्यसाम्यं॥७॥ त्वंकिन्निमित्तमिहसर्वज
नांतरात्मन्प्राप्तोसिपूर्णसकलेप्सितभावजातः॥ नातःपरंतवमनोरथभावमीयाद्ब्रह्मात्मभावपरिभाव
नपूर्णबुद्धेः॥८॥ भृगुरुवाच॥ एवंपृष्टःसभगवान्कुमारोविधिसंभवः॥ प्रत्यूचेतंसुवदनंस्निग्धगंभीर
यागिरा॥९॥ सनत्कुमारउवाच॥ आगतोहंमहाभागभवदध्वरमीक्षितुं॥ विधीयमानंविधिवत्त्वंप्राप्तुंश

कतुल्यतां॥१०॥अहोबतमहामोहमाहात्म्यंदुस्तरंनृभिः॥यत्त्वंसुवदनज्ञोपिकाशिस्थःस्वर्गमीप्सति
॥११॥राजन्किंशक्रसाम्येनविनश्वरतरेणच॥अमुंविश्वनरंकाश्यांशंकरायसमर्पय॥१२॥अन्यथा
तेवृथासर्वमप्येष्यतिविशांपते॥वाराणस्यांकृतंकर्मनीलकंठायचार्पितं॥१३॥मनःशुद्धिंविधायाशुत
त्त्वज्ञानायकल्पते॥सुवदनउवाच॥ममपुण्यपरीपाकसमाकृष्टद्विजसत्तम॥भवान्समागतोब्रह्मन्यो
गींद्रब्रूहिमेहितं॥१४॥सनत्कुमारउवाच॥सुवदनप्रियमेवभवत्कृतेपरिवदामिमहेशपुरेपरे॥विहित
कर्मविधायसमर्पयक्षितिधरेश्वरजापतयेनिशं॥१५॥नहितथाविदितोभवतापुराहरपुरीमहिमाक
लुषापहः॥शृणुवदामिहितायतवाखिलंस्वयमथोनकरिष्यसिकामितां॥१६॥मुनिर्मौनाभिधःपूर्वंबभू
वयमुनातटे॥कौषीतकीकुलोत्तंसःकृष्णोब्रह्मवित्तमः॥१७॥तस्यांतेवासिनावास्तांशुद्धौमांडव्यमुद्ग
लौ॥स्वाध्यायाध्ययनेसक्तौगुरुशुश्रूषणेरतौ॥१८॥तयोर्मांडव्यसंज्ञस्तुमौनेनमुनिनेरितः॥बलियज्ञं
प्रतिययौहौत्रंकर्तुंमहामतिः॥१९॥सगत्वातत्रददर्शमुनीन्विप्रानृषीनपि॥समागतान्यज्ञकृतेवेदवेदांगपा

रगान्॥२०॥बलिस्तंविधिवत्पूज्यन्यपूज्यस्थौचकर्मणि॥मांडव्यःकर्मतत्सर्वंचकारविधिवद्दषी॥२१॥क
दाचिदथसर्वेषुविप्रेषुब्रह्मवित्सुच॥उपविष्टेषुदैत्येंद्रोमांडव्यंप्रत्यभाषत॥२२॥बलिरुवाच॥मांडव्य
तेगुरुःकस्मान्मौनोनात्रसमागतः॥समाहूतोपिसननंतंयदिजानासितद्वद॥२३॥मांडव्यउवाच॥ना
न्यत्कारणमस्त्यत्रबलेमद्गुरोर्नागमे॥किंतुनिर्वाणदांकाशींप्रस्थितःसहमुद्गलः॥२४॥मांत्वमस्याप
यद्यज्ञेभवतःप्रीयतेप्रभो॥२५॥बलिरुवाच॥काशींगतोमुनिर्मौनःकिमुद्दिश्यप्रयोजनं॥तस्यब्रह्मवि
दःप्रायोनैवास्तेकामिताफलं॥२६॥मांडव्यउवाच॥दैत्येंद्रशंकरक्षेत्रेगंतुंकस्यनधीर्भवेत्॥अपवर्गै
कफलदेकलेवरपरिक्षयात्॥२७॥यत्कर्मतत्रकुर्वीतशुभंवायदिवाशुभं॥अक्षय्यंतत्रभवतिनात्र
कार्याविचारणा॥२८॥मौनस्कमुनिशार्दूलदांतिशांतिसमन्वितः॥तत्रस्थास्यतिचादेहपतनान्नि
रुपद्रवः॥२९॥अहंतत्रगमिष्यामिसमाप्तेभवतोध्वरे॥गुरोश्चरणशुश्रूषानिरतःसनतपुनः॥३०॥
॥बलिरुवाच॥यदिमांडव्यभवतागंतव्याशांकरीपुरी॥पूर्णेक्रतौममम्मुनेसमायास्यामितेसह॥३१॥

॥सनत्कुमार उवाच॥ बलिर्विप्रं तूर्णं सु वद नाध्वरं॥ समापयामास तदा ऋत्विजः समतोषयत्॥३२॥ कः समासेस व्यसहितो ययौ॥ बलेनाल्पेन दैत्येंद्र काशीं मोनं च वीक्षितु॥३३॥ महता समयेना काशींल ॥ अपश्यत्स पिता घोघां स मोडव्यो बलिस्त दा॥३४॥ विद्रुम पल्लव सललितश वैर्मरकतमणिमय चलद्दलरम्यैः॥ मुक्ताफलगण वज्र कमुकुलैः सुरभूरुहनिकरैरतिरम्यां॥३५॥ मदजलगंधसमास्ततचित्तैर्गणयति कर्णविधूननचटुलैः॥ स्फूर्तिकर्णमधुरगलकुहरैर्मधुकरनिकरैर्मुखरितदिशं॥३६॥ कोकिलकलरवतरलितपत्रैः परिणतरुचिरफलोत्करनत्रैः॥ शुकमुखखगगणसेवितशाखैश्च्यूतवनैरमणीयतरां च॥३७॥ शरदुडुपतिनिभवृषभपिनद्धे र्मणिगण घटनसमेधितपरमैः॥ वृषगमनानुगुणक्कणिताघैर्लघुघंटानिकरैश्च मनोज्ञां॥३८॥ चिंतामणिस्तं वा निर्मितेन परार्ध्यैरत्नैः खचितां चिरेण॥ विराजितां कल्पलताकलेन धराधराधीशसुतागृहेण॥३९॥ भीषणभैरवरनद्तपाप रितसमाकुलमनुजदुरापां जासहितसुधाकरसुंदरशेखरशंकरनियमितवासां॥४०॥

स्फुरन्नरकिन्नरमुनिजनसेवितदंडकरस्तविघ्नां॥ काशीमेवं विधां दृष्ट्वा बलिर्मांडव्यएव च॥ नमस्कृत्वा
विविशतुः पुरीं वाराणसीं परां॥४१॥ कृत्वा स्नानानि तीर्थेषु पूज्य लिंगानि नित्यशः॥ ४२॥ मौनस्य मुख्य
स्य कुटीमुभौ जग्मतुरादृतौ॥ मौनो बलिं तु विधिवदातिथ्येन समर्चयत्॥४३॥ मांडव्यश्च बलिश्चैव ववंदाते मु
दायुतौ॥ मौनस्तु कुशलं पृष्ट्वा यज्ञसिद्धिं च मंजु वाक्॥४४॥ स धर्मान् कथयच्छ्रौतान् बलिर्दैत्येश्वरं प्रति॥ अ
वितसमयं ज्ञात्वा मौनं बलिरथाब्रवीत्॥४५॥ बलिरुवाच॥ भगवन्सर्वतत्त्वज्ञ ब्रह्मविद्याविशारद॥ किं
फला कस्मात्काशी सेव्यते भवता मुने॥४६॥ तदेतत्सकलं ब्रूहि श्रोतुयोग्यावयं यदि॥४७॥ मौन उवाच॥
दैत्येश्वर मया काशी सेव्यते मुक्तिकाम्यया॥ कोहि काशीं सुमेधात्मा स्वर्गार्थ विनिषेविते॥४८॥ अत्र वि
श्वेश्वरः साक्षात्तारकं मुक्तिसाधनं॥ यस्य कस्यापि कर्णे तद्धर्मापेक्षो नु शंसति॥४९॥ सुदुर्लभमिदं क्षे
त्रं पूर्वपापाकुलात्मनो॥ अधिष्ठितं भगवता शंकरेण निरंतरं॥५०॥ स्वधर्मनिष्ठस्य जनस्य संभवेत्कथं चि
दन्यत्र मृतस्य देवता॥ काश्यां मृतस्याधमयोनिजन्मनो पुनर्भवो नास्ति बले कदाचित्॥५१॥ अत्रैव दु

चूडनगरे स्थातव्यमविशंकया॥ नहि शंकाकुलः क्वापि प्राप्नोति पदमुत्तमं॥५२॥ निर्वाणहेतोरन्यत्र विधानेपि महामते॥ मृत्यः संशयिता तेन जन्मनाशोकरूपिणा॥५३॥ तादृशस्यात्र देहस्येश शरीरत्यागमात्रतः॥ अपवर्गो भवत्येव तदन्यस्य विलंबतः॥५४॥ ज्ञानवेद्ये शरीरेस्मिन् गतमायेदुराशया॥ मज्जयंति निजात्मानं संसारे शोकसागरे॥५५॥ जानंतोपि विशेषेण मूढाः पंडितमानिनः॥ न स्वार्थेषु समीहंते न र्थं स्वार्थं न जानते॥५६॥ अतो वलेहि ताये व स्वात्मानो यततां नृणां॥ सेव्यानि नाना तीर्थानि मुक्तिक्षेत्राणि यानि च॥५७॥ अतो मयेयं नगरी शंकरस्य परात्मनः॥ सेव्यते श्रद्धधानेन मुक्तिमात्रपरीप्सया॥५८॥ सनत्कुमार उवाच॥ इत्थं सत्वदनोक्तेन मौनेन मुनिना बलिः॥ चकार काशीवासाय मतिं मतिमतांवरः॥५९॥ मौनस्तं तथा ज्ञात्वा वभाषे दानवेश्वरं॥ मौन उवाच॥ यत्त्वमिच्छसि विश्वेश क्षेत्रे स्थातुं निरंतरं॥ तत्समाकर्ण्य महाक्ये कुरु स्थितिमिदं म॥६०॥ रागद्वेषविलिप्तानां कामक्रोधाकुलात्मनां॥ पापेष्वभिरतानां च मदमात्सर्यशालिनां॥६१॥ प्रायः पापसमारंभाद्दृश्यते न्यत्र भूरिशः॥ तथाविधानां क्षेत्रेस्मिन् निवासः कलुषावहः॥

॥६२॥ अन्नस्य पापभोगस्तु दारुणो दानवेश्वर ॥ एतत्कृताघसंघात न् घोरं भुक्त्वानुपातनं ॥६३॥ पैशाच्यं
समवाप्नोति वर्षाणामयुतत्रयं ॥ वाराणस्यां निवसतिरपवर्गफलप्रदा ॥६४॥ क्षेत्राणां च पवित्राणां कल्पते
तत्वरं बले ॥६५॥ सनत्कुमार उवाच ॥ वासस्तु वदनात्यंतं दुष्करं शांकरे पुरे ॥ मत्वा लिंगं प्रतिष्ठाप्य स्वदेशं पु
नराव्रजेत् ॥६६॥ अतस्त्वया महाराज क्रतुनानेन शोभिना ॥ इंद्रसाम्यं न काम्यं हि वाराणस्यां कृतेन च ॥
॥६७॥ समर्पय महाबाहो महादेवाय वेधसे ॥ ततो मनःशुद्धिमाप्य गंतासि परमं पदं ॥६८॥ भृगुरुवाच ॥
इत्थं सनत्कुमारेण द्विजाः सुवदनो नृपः ॥ अनुशिष्टस्तथा चक्रे तत्र मोक्षं च लब्धवान् ॥६९॥ अत्रैवोदाहृ
रंती ममितिहासं पुरातनं ॥ वाराणसीगुणाख्यानं किल्बिषापहरं परं ॥७०॥ दिवोदासो भवत्पूर्वं सर्वभूपा
लभूषणः ॥ सत्यवान् धर्मतत्वज्ञः प्रजा धर्मेण पालयन् ॥७१॥ तस्यैवं धर्मनिष्ठस्य व्यतीयुर्बहुलाः समाः
॥ न बभूव सुतो विप्राः काश्यां वंशविवर्द्धनः ॥७२॥ महिषी तस्य ताराख्या सुतलाभाय देवताः ॥ धारया
मास विधिवद्ब्राह्मणानर्थतर्पयत् ॥७३॥ उपशंभुपुरे शंभोर्गणः शीघ्रफलप्रदः ॥ निकुंभ इति विख्यातः कु

मारः समवीर्यवान्॥ ७४॥ तदा सुतविहीना ये ते निकुंभस्य सेवया॥ अवापुरीप्सितान्कामानचिरेण तपोध
नाः॥ ७५॥ तारा जगाद कथितं दिवोदासं जनेश्वरं॥ विज्ञाय तन्निकुंभस्य सामर्थ्यं पुत्रलाभदा॥ ७६॥ ता
रोवाच॥ राजंस्तव प्रीतिकरः सुतो नास्ति जनाधिप॥ अतस्तदर्थं कर्त्तव्यं किंचिद्येन सुतो भवेत्॥ ७७॥
विना पुत्रेण भूपाल परलोको न शोभनः॥ उच्छिन्नसंतते राजन् पितरोऽधः पतंति च॥ ७८॥ भवानेव विजा
नाति धर्मतत्त्वं विशेषतः॥ ७९॥ दिवोदास उवाच॥ किं विधेयं मयास्मिन्निरपत्येन संप्रति॥ पुरा नानाविधो
पायास्तदर्थं समनुष्ठिताः॥ ८०॥ दैवमेव परं मन्ये पौरुषं तु निरर्थकं॥ कृतोपायोपि यदहं नन्वि पुत्रं न लब्धवा
न्॥ ८१॥ तारोवाच॥ राजन्नस्त्वं ब्रवीषि त्वं पौरुषं तु निरर्थकं॥ तथापि फलं कुर्वंति देवा अपि निरंतरं॥ ८२॥
दैवं पुरुषकारेण प्रसादयितुमर्हसि॥ आस्ते निकुंभनामात्र देवो गव्यूतिदूरतः॥ ८३॥ धर्मक्षेत्रोपधानेन
नानागणसमावृतः॥ स तु संतानहीनेभ्यः संतानं संप्रयच्छति॥ ८४॥ तत्पूजार्थं महाराज त्वयाद्यानुवा
सरं॥ गंतुमिच्छामि विधिवत्सुरोहितपुरःसरा॥ ८५॥ राजोवाच॥ कांते यदि निकुंभाख्यः संतानफलसाधकः॥

गम्यतामन्वहंतत्रराज्ञ्यायोग्यसुतेच्छया॥८६॥ भृगुरुवाच॥ इत्युक्तेनसमादिष्टातारातारेश्वराननाः॥पु
रोहितंपुरस्कृत्यनिकुंभंप्रत्यपूजयत्॥८७॥ एकंसंवत्सरंयावदानर्चस्कृतकाम्यया॥ नसिद्धलक्षणंकिं
चिद्पश्यत्तूजसुंदरी॥८८॥ अथराजाब्रवीत्कालेतारांनिरजलोचनां॥ संतानकामः संभाष्यप्रसन्ने
नांतरात्मना॥८९॥ दिवोदासउवाच॥ तारेकमलपत्राक्षीपूजायैप्रतिवासरं॥ निकुंभस्यव्रजसितत्त्वि
स्यःकिंतेमनोरथ॥९०॥ तारोवाच॥ संवत्सरस्तुसंपूर्णोनिकुंभाभ्यर्चयागतः॥ तथापिराजन्संसिद्धेने
चिन्हमपिलक्ष्यये॥९१॥ अन्येषांतुनिकुंभोसौषड्भिर्मासैर्मनोरथं॥ पूरयत्येवनियमात्त्किंदैवंततःपरं
॥९२॥ भृगुरुवाच॥ इतितारावचःश्रुत्वादिवोदासोमहीपतिः॥ जानन्नपिजगत्तत्त्वंचुकोपभृशदुःखितः
॥९३॥ उवाचचानुगान्कोपाद्विवृत्तारुणलोचनः॥ निकुंभस्यालयंगत्वातूर्णंयशकलशोद्दुतं॥९४॥ अ
वलिप्तस्यपापस्यभटास्तन्माविलंब्यतां॥ इत्याज्ञप्तास्तदातेनराज्ञाराजानुयायिनः॥९५॥ निकुंभभ
वनंतूर्णंबभंजुर्मूलतःक्षणं॥ निकुंभोथभृशंक्रुद्धःस्वप्नेप्रोवाचतंनृपं॥९६॥ राजायसद्दुर्बुधेभाग्यहीं

द्गुरवेन॥ निषेवितुं वांछसि भूमिपाल कथं भवेत्तु सम्भृद्धं तवेति॥१७॥ भृगुरुवाच॥ इति तेन हि जेंद्रेण भरद्वा
जेन बोधितः॥ जहौ दुःखं दिवोदासः श्रुत्वा काशीमहिं नृपः॥१८॥ अथ काश्यनुभावज्ञस्तद्वासकृतनिश्चयः
॥ अब्रवीत्तं भरद्वाजं विनयेन प्रसादयन्॥ १९॥ दिवोदास उवाच॥ भगवन्ननुभावोयं वाराणस्याम या श्रु
तः॥ तेन मे तत्र उषितुं मनः प्रोत्सहते मुने॥२०॥ तत्त्वं वद विशेषण स्थिरस्थितिकरं विधिं॥ भरद्वाज उवाच
॥ राजन्निकुंभवचनं नान्यथा संभविष्यति॥२१॥ समाः सहस्राद्दूर्ध्वं तु स्थातव्यं विधिवत्त्वया॥ रागद्वेषविही
नेन शिवपूजारतेन च॥२२॥ यथोक्तदेवयात्रादिविधाननिरतेन च॥ दिवोदास उवाच॥ कथं शिवार्चनं
कार्यं कथं तुष्यति शंकरः॥२३॥ कथयस्व मुनिश्रेष्ठ तद्विधातुमहं यते॥ भरद्वाज उवाच॥ अभिषिंचेच्छिवं
हृत्स्थं सेयमे नैव वारिणा॥ दयाचंदनचूर्णेन अर्चयेत्स ततं सुधीः॥ सत्यप्रसूनैः संपूज्य काशीवासेन धूप
येत्॥ ज्ञाननिराजनं दत्वा आत्मानं विनिवेदयेत्॥ इत्थं संपूजितः शंभुः प्रसीदति न संशयः॥२६॥ चिदा
नंदमयेस्थानं ददाति च निरंतरं॥ राजोवाच॥ करिष्येहं मुनिश्रेष्ठ शंकरस्य प्रपूजनं॥२७॥ शुभध्याने

नभवमः स्वस्यैवहितकाम्यया ॥ परंतु तालजंघैश्च हैहयैश्च विशेषतः ॥२८॥ कृतेनैवापकारेण दत्त्वनीव
मंनो मम ॥ तथात्र कुरु विप्रेंद्र यथा मे रिपवो खिलाः ॥२९॥ मत्पुत्रेणैव हन्यंते कुमारेण बलीयसा ॥ भरद्वा
जउवाच ॥ अवश्यं भवतः कार्यं करिष्यामि नृपोत्तमं ॥३०॥ संभारः क्रियतामत्र पुत्रेष्टिकरणाय हि ॥ भृ
गुरुवाच ॥ एवमुक्ते सति नृपः पुत्रेष्टि परिसाधकं ॥३१॥ संभारं कल्पयामास यथोक्तं तेन धीमता ॥ भरद्वा
जोपि पुत्रेष्टिं विदधे विधिवत्सुनः ॥३२॥ ततोभवत्तस्य पुत्रः प्रतर्दन इति श्रुतः ॥ हैहयास्तालजंघाश्च ते
न सर्वे पराजिताः ॥३३॥ इत्येतद्धो मया ख्यातं काशीमाहात्म्यमुत्तमं ॥ किं भूयः श्रोतुकामाश्च वदामि त
दसंशयं ॥१३४॥ ॥ इति श्रीपद्मपुराणे पातालखंडे काशीमाहात्म्ये चतुर्थोध्यायः ॥४॥ ॥ ७ ॥ ॥
मुनय ऊचुः ॥ भगवन्सर्वमेवोक्तं काशीमाहात्म्यमुत्तमं ॥ त्वया तत्र परेणेह तेन तृप्ताः स्म सांप्रतं ॥१॥
अतः परं कथय नः प्रश्नांतरमनुत्तरं ॥ पश्चाद्यं तत्र गत्वा साधयामः स्वकं हितं ॥२॥ भृगुरुवाच ॥ यन्मृ
ष्टोहं मुनिश्रेष्ठाः कथं सेव्येति सा पुरी ॥ वदामि तदहं तत्त्वं श्रूयतामवधानतः ॥३॥ विहाय काममर्थं च दंभं

मात्सर्यमेवच॥ धर्ममोक्षौपुरस्कृत्यनिषेवेतविभोःपुरीं॥४॥ प्रतिग्रहपरावृत्तःशांतिदांतिसमन्वितः॥ शंकरध्याननिरतोनिषेवेतविभोःपुरीम्॥५॥ अकुर्वन्कलुषंकर्मसमलोष्टाश्मकांचनः॥ पंचाक्षरपरोनित्यंनिषेवेतविभोःपुरीम्॥६॥ गृहीचेद्धर्मनिरतोबहिरर्जितवित्तभुक्॥ व्यवहारोपयोग्यत्रगृहीत्वाविमलंवसु॥७॥ प्रियातिथिस्तीर्थपरोनिषेवेतविभोःपुरीम्॥ स्वाध्यायाध्ययनेयुक्तोगुरुशुश्रूषणेरतः॥॥८॥ ब्रह्मचारीधर्मरतोनिषेवेतविभोःपुरीं॥ कैःसेव्येतियत्प्रोक्तंतदहंप्रब्रवीमिवः॥९॥ स्वस्वजात्यनुसारेणयोधर्मोयस्यकल्पितः॥ तत्तत्धर्मरतैरेवसेव्यावाराणसीपुरी॥१०॥ अन्यैःसंसेव्यमानासाकीकटान्नातिरिच्यते॥ अतोधर्मपरैरेवरागद्वेषविवर्जितैः॥११॥ निर्वाणमेवकांक्षद्भिःशंकरोपास्तितत्परैः॥ श्रयणीयामुनिश्रेष्ठास्तेषांसासाक्षान्मुक्तिदा॥१२॥ द्वैपायनोपिदेवेनशंकरेणद्विजोत्तमाः॥ द्वेषाकुलतयाकाश्याबहिरेवपुराकृतः॥१३॥ मुनयऊचुः॥ द्वैपायनेनकोद्वेषःकृतःकुत्रचतत्ववित्॥ वदैतत्सकलंब्रह्मन्नतत्रनःसंशयःपरः॥१४॥ भृगुरुवाच॥ आस्तेसत्यवतीसूनुर्वासुदेवकलामयः॥ ५

सतुशिष्यवृतः काशींजगाममुनिसत्तमः ॥१५॥ सगत्वातत्रसंवर्तमपश्यत्तपसांनिधिं ॥ ध्यायंतंगिरिजा
नाथंशंकरंकरुणाकरं ॥१६॥ तस्याश्रमसमीपेसस्थितवान् शिष्यसंवृतः ॥ अध्यापयामासचतान् शि
ष्यान्वेदार्थतत्ववित् ॥१७॥ तंचकोलाहलंमत्वासंवर्त्तोध्यानमत्यजत् ॥ त्यक्तध्यानततोऽपश्यद्व्यासं
व्याख्यानतत्परं ॥१८॥ जानन्नपिचसंवर्त्तः पृष्टवान्कोभवानिति ॥ कुतःसमागतःकाश्यांकियान्का
लस्तवाभवत् ॥१९॥ एवंजिज्ञासितस्तस्यव्यासोनोत्तरमब्रवीत् ॥ अथजैमिनिरत्यर्थंचैरुवाचप्रहस
न्निव ॥२०॥ जैमिनिरुवाच ॥ अहोचित्रमिदंब्रह्मन्यत्वंसत्यवतीसुतं ॥ वेदव्यासंनजानीषेवर्तमानो
जगत्त्रये ॥२१॥ अयंनारायणःसाक्षाद्विद्यानिधिरनर्घ्यवाक् ॥ द्वैपायनःशिष्ययुतोनैमिषारण्यतोमुने ॥२२
॥ अधुनैवागतःकाश्यांप्रसंगान्नतुगौरवात् ॥ यत्रचायंमुनिस्तिष्ठेत्तत्रतीर्थानिसर्वशः ॥२३॥ धर्मव्य
वस्थानानिनःस्वाध्यायप्रविभागकृत् ॥ भृगुरुवाच ॥ इतिजैमिनिनाप्रोक्तंसमाकर्ण्यमुनीश्वराः ॥२४॥
संवर्त्तःप्रहसन् श्लक्ष्णंबभाषेजैमिनिंमुनिं ॥ जैमिनेत्वंनवाच्योसिक्रूरंकाशीगतेनमे ॥२५॥ ब्रवीतु

भगवान्व्यासोवचोधर्मसमन्वितं॥ जानाम्यहंमहाभागंकृष्णद्वैपायनंमुनिं॥ २६॥ तथापिनास्ययुक्तं
हिधर्मबाधनचेष्टितं॥ अथव्यासोब्रवीत्किंत्वासंवर्तंप्रतिसादरं॥ २७॥ आवयिष्यन्विशेषेणशिष्या
न्काशीकथांपरां॥ व्यासउवाच॥ किंमयानुष्ठितंब्रह्मन्धर्मबाधनचेष्टितं॥ २८॥ तत्वंकथयसंवर्त्तधर्मे
मुत्स्यतिपद्मभूः॥ संवर्तउवाच॥ द्वैपायनमुनिश्रेष्ठकाशीयंशांकरीपुरी॥ २९॥ तीर्थानामुत्तमातद्धृत्क्षेत्रा
णामपिचोत्तमा॥ अस्याःसंदर्शनंव्याससर्वपातकघातकं॥ ३०॥ अस्योनिवासोनिर्वाणंसाधयत्यंजसा
मुने॥ अनेकजन्मसाहस्त्रैर्यत्तपःफलमर्ज्यते॥ ३१॥ ततोप्यधिकमेवात्रत्रिरात्रोपोषणाद्भवेत्॥ अत्र
क्षेत्रांतरेव्यासम्रियमाणस्यकर्मिणः॥ ३२॥ तारकंकथयत्येवब्रह्मात्मैक्यप्रकाशितं॥ कोटिजन्मसुय
त्नेननिर्वाणंप्राप्यकैःपरैः॥ ३३॥ अनुष्ठितैरपिमुनेनिर्वाणंलभ्यतेनवा॥ अत्रक्षेत्रेत्यजन्प्राणान्प्राप्नो
त्येवपरांगतिं॥ ३४॥ एवंभूतंपरंक्षेत्रंप्राप्यशिष्यगणैःसह॥ चक्रपुष्करिणीतोयेजान्हवीजलसंयुते॥ ३५
॥ स्नात्वानाभ्यर्चितःशंभुर्देवदेवःसनातनः॥ द्वैपायनेदंभवतोधर्मबाधनचेष्टितं॥ ३६॥ तस्माद्गच्छय

था वस्त्वं कुरु तीर्थविधिं परं॥ जानीषे धर्मतत्त्वज्ञ ततो नाहं वदामि तत्॥ ३७॥ भृगुरुवाच॥ संवर्त्तैनैवमु
क्तस्तु व्यासः शिष्यगणावृतः॥ तीर्थावगाहं विधिवच्चकार विधितत्त्ववित्॥ ३८॥ विश्वेश्वरं समभ्यर्च्य
गौरीं विघ्नविनायकं॥ निर्वाणमंडपे तस्थौ चिह्नापीमभिवादयन्॥ ३९॥ रुद्रसूक्तानि सर्वाणि जजाप श्रु
तिपारगः॥ एवं स्थितस्य व्यासस्य सत्वजिज्ञासया प्रभुः॥ ४०॥ बीभत्सं कुत्सितं वेषं समास्थाय महेश्व
रः॥ अगच्छन्मुनिदृष्टे पुउपवेष्टुं च वीतभीः॥ ४१॥ अभिसत्यवतीसूनुं निषिद्धोपि ययौ मुहुः॥ अथ पारा
शरो व्यासो द्वेषक्रोधसमाकुलः॥ ४२॥ शप्तुमेवमनश्चक्रे ततः सोंतरधीयत॥ प्रादुरासीद्दुराधर्षः शंकरो लोक
शंकरः॥ ४३॥ अकलंकशरत्पूर्णशशांकायुतसप्रभः॥ सोमसूर्याग्निनयनो दशबाहुः शशांकभृत्॥
॥ ४४॥ गौरी परीरब्धतनुर्नानायुधसमुज्वलः॥ तं दृष्ट्वा ते मुनिगणा द्वैपायनपुरोगमाः॥ ४५॥ प्रणम्य वि
धिवद्देवमस्तुवन् विविधैः स्तवैः॥ अथोवाच महादेवो व्यासं कुप्यन्निव प्रभुः॥ ४६॥ द्वैपायन बहिर्याहि
नात्र स्थेयं मनागपि॥ रागद्वेषान्नचित्तानां निवासायन मे पुरी॥ ४७॥ अवैमि त्वां महाबुद्धे मदेकशरणं मुने॥

ऽंभोब्रवीमि मक्षेत्रान्नातिदूरेव्यवस्थितः॥ ४८॥ मामाराधयनिःकामः सततंमत्परायणः॥ ततोरागा
दिनिर्मुक्तोमत्पुरेस्यास्यसिद्ध्रुवं॥ ४९॥ एवमुक्तोभगवताव्यासोंतेवासिभिःसह॥ पालयन्शंकरस्या
ज्ञांबहिरेवावतिष्ठते॥ ५०॥ इत्येतद्धोमयाख्यातंयत्पृष्टोहंमुनीश्वराः॥ तस्माद्रागादिहीनैःसा सेव्या
मुक्त्याधिकारिभिः॥ ५१॥ परिमाणंचवक्ष्यामितन्निबोधतसत्तमाः॥ मध्यमेश्वरमारभ्ययावद्देहलिवि
घ्नपं॥ ५२॥ सूत्रंसंस्थाप्यचतुर्दिक्षुभ्रामयेन्मंडलाकृतिः॥ तत्रयाजायतेरेखातन्मध्येक्षेत्रमुत्तमं॥ ५३॥
काशीतिचविदुर्वेदास्तत्रमुक्तिःप्रतिष्ठिता॥ काश्यंतःपरमंक्षेत्रंविशेषफलसाधनं॥ ५४॥ वाराणसीति
यत्ख्यातंतन्मानंनिगदामिवः॥ दक्षिणोत्तरयोर्नद्योवरणासिश्चपूर्वतः॥ ५५॥ जान्हवीपश्चिमेचा
पिपाशपाणिर्विनायकः॥ अस्याअंतःस्थितंदिव्यंविशेषफलसाधनं॥ ५६॥ अविमुक्तमितिख्यातं
तन्मानंचब्रवीमिवः॥ विश्वेश्वराच्चतुर्दिक्षुधनुःशतयुगोन्मितं॥ ५७॥ अविमुक्ताभिधंक्षेत्रंमुक्ति
स्तत्रनसंशयः॥ गोकर्णेशःपश्चिमेपूर्वतश्चगंगामध्यश्चोत्तरेभारभूत॥ ५८॥ ब्रह्मेशानोदक्षिणेसंप्रदि

ष्टस्त्वं त्वया प्रोक्तं भवनं विश्वभर्त्तुः ॥ मुनय ऊचुः ॥ भगवन्भवता प्रोक्तं क्षेत्रं शंभोश्चतुर्विधं ॥ ५९ ॥ किं किं फलं
लभेद्ब्रह्मन्तत्र तत्र मृतो जनः ॥ भृगुरुवाच ॥ चतुर्विधेपि क्षेत्रेस्मिन्भ्रमीतो गर्भयातनां ॥ ६० ॥ नैवाप्नोति
मुनिश्रेष्ठा विशेषो यं परस्स्मृतः ॥ काश्यां मृतस्तु सालोक्यं साक्षात्संप्राप्नोति सत्तमाः ॥ ६१ ॥ ततः सरूपतां या
ति ततः सान्निध्यमश्नुते ॥ ६२ ॥ ततो ब्रह्मैकतां याति न परावर्तते पुनः ॥ वाराणस्यां मृतो जंतुः साक्षात्सारू
प्यमश्नुते ॥ ६३ ॥ ततः सान्निध्यमायाति ततो ब्रह्मैकतामियात् ॥ अविमुक्ते विपन्नस्तु साक्षात्सान्निध्य
माप्नुयात् ॥ ६४ ॥ ततश्चिदानंदमये ब्रह्मण्येव विलीयते ॥ सलोकतां सरूपत्वं सान्निध्यं चापि सत्तमाः
॥ ६५ ॥ कल्पं कल्पमवाप्नोति ततो ब्रह्मात्मको भवेत् ॥ मुनय ऊचुः ॥ सर्ववेदार्थतत्त्वज्ञ त्वदुक्तं भावितं हि
नः ॥ ६६ ॥ अतः परमिदं ब्रूहि ज्ञानाविर्भावनिश्चयं ॥ भृगुरुवाच ॥ चतुर्धा भाविते क्षेत्रे सर्वत्र भगवां -छि
वः ॥ ६७ ॥ व्याचष्टे तारकं वाक्यं ब्रह्मैक्यप्रतिबोधिकं ॥ तथापि तत्र सामर्थ्यात्तत्र तत्र मृतस्य ह ॥ ६८ ॥
भोगपूर्वापवर्गाप्तिर्जीवन्मुक्तदशीव सा ॥ अंतर्गेहविपन्नस्तु साक्षात्कैवल्यमाप्नुयात् ॥ ६९ ॥ उपायं

चात्र वक्ष्यामि येनोपायेन लभ्यते॥ जन्मांतरसहस्रैस्तु विहितैर्धर्मकर्मभिः॥७०॥ महादेवार्पितैः
साहि प्राप्या वै श्वेश्वरीपुरी॥ शंभोरनुग्रहाद्देवशंकराराधने स्थितान्॥७१॥ तत्क्षेत्रं प्राप्यते विप्रा ना
न्यैः साधनकोटिभिः॥ रहस्यमिदं वक्ष्यामि तच्छृणुध्वं द्विजोत्तमाः॥७२॥ नैतत्क्षेत्रसमं किंचित्त्रिषु लो
केषु विद्यते॥ अधिकं वा मुनिश्रेष्ठाः सत्यमेव ब्रवीमि वः॥७३॥ तिष्ठेदत्र स्वधर्मेण देहपातपरीप्सया॥
पातकं नैव कुर्वीत कथंचिदपि लेपकृत्॥७४॥ प्रमादकृतलोपाय प्रतिभूतं विभोर्गृहं॥ कुर्यात्प्रदक्षी
णं नित्यं तत्कल्मषजिहीर्षया॥७५॥ अयनद्वितये कुर्याद्वाराणस्याः प्रदक्षिणं॥ प्रतिसंवत्सरं चापि का
शीमप्यभितश्चरेत्॥७६॥ त्रिचतुर्दशलिंगानां भूते पूजापरो भवेत्॥ चतुर्दशानामपि च शिवभूते च
को भवेत्॥७७॥ रुद्रसूक्तं जपेन्नित्यं रुद्रमंत्रं च शीलयेत्॥ प्राणमंत्रं रुद्ररूपं भावयेद्विजितेंद्रियः॥
॥७८॥ विरक्तः कामनाहीनो द्वेषदंभादिवर्जितः॥ निवसेत्सततं काश्यामेवं ब्रह्मैव पश्यति॥७९॥
॥ किमत्र चित्रं विप्रेन्द्राः काश्यां मुक्तिसमागमे॥ भागीरथी विमिश्राणां तीर्थसामर्थ्यसंसदि॥८०॥

केवलज्ञानान्हवीविप्राज्ञानाज्ञानाथवापुनः॥ अपवर्गेविनरतिस्ततोयत्यक्तदेहिनः॥८१॥ यस्यकस्यापिवाजं
तोर्भागीरथ्यांगतायुषः॥ नदुर्लभोब्रह्मभावस्तत्संगस्यपितांहसः॥८२॥ चिदानंदमयंब्रह्मगंगाभावमुपा
गतम्॥ ब्रवीमिसत्यमेवैतत्मात्रवःसंशयोभवेत्॥८३॥ इयंसोमोद्भवापुण्यासरितोन्याश्चयाभुवि॥ताः
सर्वाजान्हवीतीरस्थापुताएवयाविकाः॥८४॥ रत्नाकरोपिमुनिनाशोषितःकुंभयोनिना॥ भागीरथीजलै
रेवपूर्णकल्लोलमाल्यभृत्॥८५॥ एवंप्रभावानिर्वाणतोयराशिवहानदी॥ भागीरथीविलसतिक्षेत्रेशंभो
र्विमुक्तिदे॥८६॥ ऐकैकमपिविप्रेंद्रासाक्षाद्ब्रह्माप्तिसाधनं॥ नचित्रमत्रहितयंयन्निर्वाणायकल्पते॥८७
॥ कीकटेपिभ्रमीतस्यपापकर्मरतस्यच॥ यद्यस्थिखंडंगंगायांनिपतेद्दैवयोगतः॥८८॥ तदासक्षीण
पापःसन्दिव्यभोगसमन्वितः॥ षष्टिवर्षसहस्राणिस्वर्गलोकेमहियते॥८९॥ ईदृशीस्वर्णदीयत्रसर्वतीर्थ
र्थसमन्विता॥ तांकाशींकोनसेवेतभीमसंसारमुक्तये॥९०॥ इत्येतद्दोमयाख्यातंकाशीमाहात्म्यमुत्तमं॥
यस्यश्रवणमात्रेणसर्वपापैःप्रमुच्यते॥९१॥ सूतउवाच॥ शौनकैवंभगवताभृगुणाभृगुसूनुना॥ शंभोःसे

त्रस्य महिमा प्रोक्तः सर्वहितेच्छया ॥९२॥ एतस्य श्रवणादेव पापसंघातपंजरं ॥ सद्यो विलयमायाति तूलम
प्याविबाहितं ॥ ९३॥ श्रोतव्यमनसूयद्भिः पठनीयं प्रयत्नतः ॥ एनसां विप्रणाशाय प्रीतये पार्वतीपतेः ॥ ९४ ॥
एतदेव परं तत्त्वमेतदेव परं तपः ॥ ॥ इति मत्वा प्रयत्नेन जपेदि‍—दमनन्यधीः ॥९५॥ एतज्जपेन संतु
ष्टो महादेवः सनातनः ॥ दद्यादभीप्सितानर्थान्नात्र कार्या विचारणा ॥९६॥ अष्टोत्तरशतं मार्द्दलिंगानि परिपू
ज्य च ॥ माहात्म्यं शृणुयात्काश्याः श्रत्यहं नियमान्वितः ॥९७॥ तस्य संवत्सरेणास्यात्पुत्रः शीलगुणान्वित
॥ दीर्घायुरतिलक्ष्मीवान् शिवाराधनतत्परः ॥९८॥ ॥ इति श्रीपद्मपुराणे पातालखंडे काशीमाहात्म्ये
भृगुमुनींद्रसंवादे पंचमोऽध्यायः समाप्तः ॥ ५॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः ॥ काशी संस्कृतमुद्राया
मंकितोयं शिलाक्षरैः ॥ १॥ श्रीकाशीजीमे ज्ञानवापीके पूर्व फाटकपर श्रीविश्वनाथजीके पास महाराज शिवला
लदुबेजी इनंके मकानमे काशी संस्कृत मुद्रा यंत्र मे छपी जिनको लेना हो य उन्होने इस छापे खाने के कार्य संपाद
क श्री पुत् बाबू वाराणसीप्रसाद याक चौरीगली मे भाई प्रतापसिंहजी के दुकानमे मिलेगी ॥ सं॰ १९३१ मार्ग कृष्ण ९

इतिश्रीकाशीमाहात्म्यंसमाप्तिमगमत्

अथ पंचक्रोशीमाहात्म्यं प्रारभ्यते॥

श्रीगणेशायनमः॥ ॥श्रीकपिलउवाच॥एवंसिद्धाः काशिकायांवसेद्यः सर्वैर्द्धर्मैः संयुतः स्तोतिवंद्यं॥ न
स्वाःद्धर्माः सततंसिद्धिभूमौसंसेव्याः स्युः पापकर्तास्यमत्र॥१॥येयेधर्मामानवैः संप्रयुक्ताः काश्यां
तेतान्मोक्षसिद्धिंनयंति॥ तस्मात्सिद्धिः साधयेदात्मकार्येसद्भिः शास्त्रैः श्रद्धयात्यागयोगैः॥२॥का
श्यांकृतानांपापानांपुण्यानांवासमृद्धयः॥ भवंतिसततंनूनंसुक्षेत्रेह्युप्तवीजवत्॥३॥ सिद्धाऊचुः॥दे
वदेवारविंदाक्षसांख्ययोगप्रवर्तक॥ कथंमुच्येतमनुजः काश्यामेवकृतैरघैः॥४॥ मोक्षंप्राप्नोतिचक
थंकथंवाजीवनेसुखं॥ आनंदकाननेह्यस्मिन् कथमानंदभाग्भवेत्॥५॥ कपिलउवाच॥ इदमेवपु
राष्टष्टः पार्वत्याभगवान्भवः॥ पापनाशंधर्मवृद्धिरविलंबेनमोचनं॥६॥ पार्वत्युवाच॥ दीनानाथैकशर
णदेवदेवदयानिधे॥ पाहिलोकान्वदेदद्यान्सूक्तैः पापप्रणाशनैः॥७॥ आगत्यशीघ्रंयेप्राप्ताः काशीं
तीर्णाः क्षणेनते॥ येतुस्थित्वासुकृतिनस्तेपिशीघ्रंपरंगताः॥८॥ पापंकृत्वामृतायेचतेषांमुक्तिः कथं
भवेत्॥ कृपयादेवदेवेशप्रायश्चित्तमशेषतः॥९॥ महादेवउवाच॥ शृणुपार्वतिवक्ष्यामियद्गोप्यं

ममसर्वेनः॥ पुण्यवद्भिः पापवद्भिः कर्तव्यं काशिवासिभिः॥१०॥ नकोपिदृष्टोमनुजोविनापापंश
रीरभाक्॥ कुर्वन्नपिमहापुण्यंपापंसंस्कारनश्वरेत॥११॥ देहः स्वकापिंकुरुतेइंद्रियाणिस्वक
र्मसु॥ प्रवर्त्तंते बलादेव मनः केननिवार्यते॥१२॥ प्रायश्चित्तानिकिंतानियैः पुनः संप्रवर्तते॥ मनः
शरीरादिपुनः प्रायश्चित्तंननत् भवेत॥१३॥ प्रायश्चित्तत्रपंसूक्ष्ममनुभूतंमहात्मभिः॥ ब्रह्महत्या
दिपापानामन्यपापकृतांतुकिं॥१४॥ काश्यामपिवसन्जंतुर्यदिपापकृदत्रहि॥ प्रायश्चित्तत्रपं
कृत्वासद्योमुच्येतबंधनात्॥१५॥ देव्युवाच॥ आश्चर्यमेतद्भगवन्त्वयानिगदितंविभो॥ वाराण
स्यांकृतैः पापैर्मुच्यतेयन्नरः सकृत॥१६॥ कूपपातस्थैतद्धिकलावपिहिनिष्कृतिः॥ कलौकलुष
चित्तानांक्वधर्मः क्वपरंपदं॥१७॥ श्रीभगवानुवाच॥ शृणुलोकेहितेदेविलोकानामुद्धृतिंपरां॥ प्रा
यश्चित्तत्रयंवच्मिकाश्यांनः संदिधस्सतां॥१८॥ वापीकूपतडागादिजीर्णोद्धारकृतां नृणां॥ प्रभवेन्न
महत्पापंकाश्यामपिकृतंहियत॥१९॥ आपोनाराइतिप्रोक्ताआपोवैनरसूनवः॥ अयनंतस्यताःपू

र्वतेननारायणः स्मृतः ॥ २० ॥ तेनेश्वरेण हरिणा कृतं पापप्रणाशनं ॥ यत्र यत्र जलं काश्यामुदरे तु कृ
तो नरः ॥ २१ ॥ तत्र तत्र मुदा युक्ताः पितरः पर्युपासते ॥ काश्यां रुद्रमयाः सर्वे जंतवः श्रुतिनोदिताः ॥ २२ ॥ ते
पिबंति जलं यत्र तडागादौ तृषार्दिताः ॥ तत्पुण्यं न मया वक्तुं शक्यं वर्षशतैरपि ॥ २३ ॥ आसीद्धर्मपयो ना
म वणिक्कश्चित्सुधार्मिकः ॥ कुलस्तंभस्य वापश्च तेन खातः प्रखानितः ॥ २४ ॥ तत्र गावो मनुष्याश्च पिबंत्यं
भस्तृषार्दिताः प्रत्यहं तस्य सुकृतं वर्धते चंद्रमा यथा ॥ २५ ॥ सूक्ष्मधर्मो मनुष्याणां दुर्लभो विषयात्मनां ॥ का
लेन महता तत्र दुर्भिक्षकरपीडितः ॥ २६ ॥ दरिद्रतामवापोच्चैः ब्रह्मणकृदभूततः ॥ ब्राह्मणेन धृतः क्वापि
स्वधनार्थं ऋणी वणिक् ॥ २७ ॥ मह्यं नं देहि दुष्टेति परिक्षिप्तः पुनः पुनः ॥ ब्राह्मणेन वणिग्धर्मपयो दैन्यमुपा
गतः ॥ २८ ॥ इदानीं न धनं किंचिदस्ति ब्राह्मणसत्तम ॥ ब्राह्मण उवाच ॥ शतत्रयपरीमाणं निष्कानां हे मदेहि न
॥ २९ ॥ नो चेत्तडागो मन्नाम्ना प्रथितश्चास्त्वया परं ॥ त्वत्कारितो बहुधनैर्गंभीरो निर्मलोदकः ॥ ३० ॥ विमुक्तो
भवदत्त्वा श्रुतडागं लोकसन्निधौ ॥ धर्मपय उवाच ॥ अवश्यं मोचयतु मामृणाच्छीघ्रं भवान्प्रभो ॥ ३१ ॥ त्र

णयुक्ताम्रियंते चेत्पच्यंते नरकार्णवे॥ जनाश्चोरजनस्यापिगृहीत्वाधनमत्रतु॥ ३२॥ नरके पारपच्यंते
कणयुक्तानराधमाः॥ किंपुनर्ब्राह्मणस्याणुमात्रंहृत्वामृतोहियः॥३३॥ ब्राह्मणायहृरिष्यंतिनत्कतौस्मिनसं
शयः॥ सतुवार्द्धुषिकोगत्वामेलयित्वाद्विजान् बहून्॥ ३४॥ आनयामासदेवेशिपत्रधर्मपथोवणिक्॥
द्विजैःदृष्टोवणिग्विप्रोकथ्यतांह्वानकारणं॥ ३५॥ यदर्थंवयमाहृतास्तत्कृत्वोपदिशामहे॥ धर्मपथउवा
च॥ अहंऋणीब्राह्मणस्यनिष्कानांवशतत्रयं॥३५॥ गृहीतंव्यवहारार्थंदेवाद्यष्टंशनैःशनैः॥ असौनिनि
यमेनाशुसुवर्णस्यतडागजं॥३६॥ सुकृतंप्रार्थयत्येवनहिचार्पययोग्यतां॥ यथाकथंचिन्मुक्तःस्यांतथा
शीघ्रंनिधीयतां॥३७॥ ब्राह्मणाऊचुः॥ साधूक्तंधर्मपथतेऋणभीत्यामहामते॥ सुविचारितमस्माभिर्वक्तव्यंसु
दृढंखलु॥३८॥ अस्मान्नाहूयपोधृष्टोनश्रोष्यतिवचोहिनः॥ शिरस्तस्यविशीर्णःसन्पतिष्यतिनसंशयः॥
३९॥ ब्राह्मणउवाच॥ ब्राह्मणानांवचोग्राह्यंमयासर्वात्मनाहितं॥ अत्रप्रमाणंभगवान्विश्वेशःपार्वतीप
तिः॥४०॥ धर्मपथउवाच॥ यद्भूमिदेवैर्वक्तव्यंतन्मयाग्राह्यमेवहि॥ अत्रप्रमाणंभगवान्विश्वेशःपार्वती॥

न्मा
३

पतिः॥४१॥ द्विजा ऊचुः॥ आनेतुं न मनुष्या ये समर्था महती शिला॥ इति श्रुत्वा सुबलिभिर्वणिक् धर्मपथः
क्षणात्॥४२॥ आनयामास विपुलां दृष्ट्वा चुक्रोश ब्राह्मणास्तु तां॥ निक्षिप्य तां तडागे त्र निमग्नास्तु कणावधि॥
४३॥ यावन्मनुष्यैः पशुभिः पथिकैश्चापि तज्जलं॥ पीतं तद्दुन पर्याप्तमन्नज्जनुनतत्स्विपं॥४४॥ इत्युक्तास्तु
शिला विप्रैः पातिता तज्जले शुभे॥ चक्रुः शिवकथां पुण्यां काशीवासिजनैर्वृतां॥४५॥ क्षणांतरे गौस्तृषिता
सवत्सा समुपागता॥ तया पीतं जलं तत्र सा साभवच्छृणु पार्वति॥४६॥ सा शिला ऋषिमुख्यानां प्रभावाज्जल
मध्यतः॥ जलोपर्यभवच्छीघ्रं पश्यतां सर्वदेहिनां॥ यथा तुंबीफलं शुष्कं गच्छतीनीनतस्ततः॥ तया लघु
तरा जाता पश्य धर्मस्य गौरवं॥४८॥ सर्वे लोकास्तु तं दृष्ट्वा प्रशशंसुर्ऋषिपुंगवान्॥ अपूर्वं दर्शितं पुण्यमृषि
भिः सुमहात्मभिः॥४९॥ अहो न दृष्टमस्माभिः कदाचित्सुमहाद्भुतं॥ पुण्यं सूक्ष्मं न जानंति सर्वे लोकाः कथं
चन॥५०॥ महादेव उवाच॥ काश्यां किंचिज्जलं येस्तु संपादितमनामयं॥ न तेषां पापलेशोपि काश्यामपि
कृतं प्रिये॥५१॥ परं तु सावधानैर्हि कर्तव्यः सुजलाशयः॥ अपराधो न भवति महापापकृतस्य यः॥५१॥ देवद्रु

वापं॥ जलाशयेकृते देवकारिते वा महात्मभिः॥ कोपराधः पतेदत्र नन्ममाचक्ष्व शंकर॥५२॥ महादेव उवा
च॥ काश्यांतिलेतिलेलिंगं काश्यां तीर्थं पदेपदे॥ खननं काशिभूमेस्तु दुर्घटं भाति पार्वति॥५३॥ जीर्णोद्धारं च
ये कुर्युस्ते निःसंदेहा महाधिपः॥ स्वयंकृतं परत्वाना दित दनेकफलप्रदं॥५४॥ ततोप्यधिकधर्मादि जनकं।
जीर्णमुद्धृतं॥ न तत्र लिंगपीडा स्यान्न तीर्थखननं भवेत्॥५५॥ अतो जीर्णोद्धृतिः कार्या निरवद्या महाफ
ला॥ जीर्णोद्धारं प्रकुर्वंति तेषां विश्वेश्वरः स्वयं॥५६॥ काश्यां कृतानां पापानां मूलोद्धारं करोति हि॥ यो बु
द्धिपर्वं प्रकरोति पापं न तस्य काश्यां मरणं प्रसिध्यति॥५७॥ मृतोपि निर्वाणसुखं न वा प्नुयात् यावत्पिशा
चत्वमवाप्नुयान्नरः॥ देव्युवाच॥ पिशाचत्वस्य मर्यादां ब्रूहि पापस्य चानघ॥ यातना याश्च यद्रूपं वुध्य बु
द्धिकृतं च यत्॥५८॥ भगवानुवाच॥ भवानि भवभीतानां नृणां निस्तारकारणं॥ इष्टं इष्टं श्रथ कुप्रवक्ष्यामि
भीतानामभयप्रदं॥५९॥ काश्यामागत्य सततं श्रोतव्या काशिसत्कथा॥ न विना श्रवणं पुण्यं पापं वा वे
ति कश्चन॥६०॥ विदित्वा पतनं ते भूयो निस्तारायपरायच॥ सर्वलोकेषु वेदेषु विचारः श्रवणाद्भवेत्॥६१॥

श्रुतिस्मृतिपुराणेषु सर्वशास्त्रेषु पार्वति ॥ काशी ब्रह्मेति विख्यातं तत्र ब्रह्म प्राप्यते न हि ॥ ६२ ॥ तस्मात्काशी
गुणान्सर्वे तत्र तत्र वदंति हि ॥ श्रुत्वापि पापनिरतास्तान्हन्यात्कालभैरवः ॥ ६३ ॥ सततं निर्दयो भूत्वा या
तनापं समाप्यते ॥ महापातकसंयुक्तास्त्रिंशद्वर्षसहस्रकं ॥ ६४ ॥ प्रत्येकं प्राप्नुवंत्येव यातनां कालभैर
वीं ॥ क्षुद्राणि पापानि तु संग्रहेण भवंत्यवश्यं तु महांति तानि ॥ यथा हिरण्यं कणशोपि संचितं निष्कादिवृ
द्धिं भवते भवानि ॥ ६५ ॥ सर्वोपि लोकः कुरुते प्रवृत्तिं प्रवृत्तिभाजां खलु पातकं स्यात् ॥ अतः किमत्र जीवित
मा कलय्य निवृत्तिरंगीक्रियते मुमुक्षुभिः ॥ ६६ ॥ वाक्पातकं मानसकायिके च प्रवृत्तिमार्गे निरतस्यावश्यं
॥ भवत्यसौ यद्यपि सावधानस्तथापि संस्कारवशादुपैति ॥ ६७ ॥ अतः प्रवृत्तिं परिहाय सेव्या वारा
णसी साधुजनैः सुखार्थिभिः ॥ न चेद्यथेष्टाचरणेन यत्फलं तद्भोगकाले प्रकटीभविष्यति ॥ ६८ ॥ लौकि
को यातनाः केचित्सोढुं शक्या न पार्वति ॥ किं पुनः कालराजेन कृतास्तीव्रातिदुःखिताः ॥ ६९ ॥ नित्यं
कृतानां क्षुद्राणां पापानां नित्यकर्मणा ॥ नाशः संपाद्यते सद्भिर्गंगास्नानादिभिर्नृभिः ॥ ७० ॥ त्रिंशद्वर्षस

हस्राणि त्रिंशद्वर्षशतानि च॥ पच्यते दुःखसंघोघैः कालराजेन सादरं॥७१॥ अतः श्रुत्वा न डागादन्ना
षोद्धारं प्रकल्पयेत्॥ क्षेत्रे कृतानां पापानां प्रायश्चित्तं गतं मम॥७२॥ असावधानाद्दिनरात्मनो वै कुर्वं
ति पापानि किमत्र चित्रं॥ पठंति जानंति वदंति नित्यं दासु पंडितास्तेपि विषाग्निमध्यगाः॥७३॥ भवंति दुः
खान्यनुभूय पश्चात्तापेन पापेन च दह्यमानाः॥ पुनः पुनर्विषयासक्तचित्ताः शास्त्रं गुरुं देवमथो नु काशीं
॥७४॥ न्यक्कृत्य भूयो विषयेषु वबुद्धिं कुर्वंति सत्यां ननु काशिकायां॥ व्यवहारोपि तैस्त्यैकः प्रसिद्धः
सर्वजंतुषु॥ मृत्तिकापरिवर्तेन हिरण्यं प्राप्यते न हि॥७५॥ अहो काश्यां कौतुकं नु पश्य पार्वति सर्वदा॥
गृहीत्वा नरकं देहं प्रददात्यमृतं पुनः॥७६॥ श्रुत्वाध्यायमिमं पुण्यं न दुःखैरभिभूयते॥ सुखवासश्च भ
वति काश्यां सर्वजनप्रियः॥७७॥ इति श्रीब्रह्मवैवर्ते पंचक्रोशिमाहात्म्ये प्रथमोध्यायः॥१॥ ॥ श्रीदेव्यु
वाच॥ देवदेव महादेव भक्तानामभयप्रद॥ काशीवासः सुगहनः पापिनां धनलोभिनां॥१॥ विषयास
क्तमनसां न सुखाय कदाचन॥ सुखाय सर्वलोकानां प्रवृत्तिः कथिता कलौ॥२॥ विषयैः परिपुष्टानां जीव

पं.मा. नेनान्यथा भवेत॥ प्रायश्चित्तानां नरं देववरस्व प्रदिमन्यसे॥ ३॥ प्रायश्चित्तविहीनस्य पातना जायते

५ ध्रुवं॥ बिभेमि दीनान्मनुजान्दृष्ट्वा शास्त्रपराङ्मुखान्॥ ४॥ तानप्युद्धर देवेश शठान्स्वेच्छापरिग्रहा

न्॥ महादेव उवाच॥ साधु पृष्टं त्वया देवि सेत्रपापकृतां नृणां॥ ५॥ निस्तारः स्याद्यथा मे स्तु प्रायश्चित्ते

नपेन हि॥ प्रायश्चित्तविहीनानां यातना बहुदुःखदा॥ ६॥ तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत्॥

जैगीषव्यो मुनिश्श्रेष्ठस्तपस्वी मत्परायणः॥ ७॥ तेन पृष्टोहमागत्य शिष्यार्थं तद्दयालुना॥ स्तुत्वा मां वेदि

कैः सूक्तैः स्मार्तैः पौराणिकैः शुभैः॥ ८॥ प्रसन्नं मां मुनिर्ज्ञात्वा वचनं चेदमब्रवीत्॥ जैगीषव्य उवाच॥ किं

चिद्विज्ञप्तुकामोहं देवदेव दयानिधे॥ ९॥ आज्ञया प्रवदाम्यज्ञः सर्वज्ञस्य तवाग्रतः॥ मया चोक्तो वद त्व

मित्वं मद्भक्तः प्रियः शुचिः॥ १०॥ अदेयं तव नास्त्यद्य निर्वाणाद्यपि याच्यतां॥ यस्तु मां सर्वभावेन भजते को

पि मानवः॥ ११॥ न तस्यादेयमस्तीह त्रैलोक्ये सचराचरे॥ जैगीषव्य उवाच॥ अयं मम दुराचारः शिष्यः पा रामः

परज्ञः सदा॥ १२॥ काश्यां वसन्नपि मदान्कृत्याकृत्यं न वेत्ति यत्॥ शिक्षितो बहुधास्माभिर्बहुधा ताडितो ५

पिच॥१३॥ परदारपरद्रोहरतः परधनापहृत्॥ पिशुनः पापनिरतो वेश्यागृहनिवासकृत्॥१४॥ पि
तृमातृगुरुद्रोही विप्रमित्रध्रुगेव च॥ किं बहूक्तेन देवेश पापनिर्वचनं मया॥१५॥ न शक्यते लज्जयास्य
कर्तुं पंक्त्यां ब्राह्मणोह्यसौ॥ मया निष्काशितः पाप आश्रमात्स्वात्ततो गतः॥१६॥ किं विकिं विचेष्टितं हि ज्ञा
त्वा श्रुत्वापि शिक्षितः॥ न करोति यदा किंचित्छिक्षितं निंदनं स्वयं॥१७॥ तदा वाग्भवदाहारोपि त्यक्तः सर्वा
त्मना मया॥ मत्संनिधौ विनयवान्वेश्याचारो बहिः सदा॥१८॥ इति पौरमुखाच्छ्रुत्वा चेष्टितं तस्य दु
र्मतेः॥ मत्संनिधानाद्गच्छ त्वं नो चेच्छप्स्यामि दुष्कृत॥१९॥ मतः पठित्वा शास्त्राणि धर्मज्ञानमपानि
च॥ करोषि नित्यं तत्कर्म येन लोकः पराङ्मुखः॥२०॥ बहुधा सर्वलोकेभ्यः श्रुत्वा दुर्विनयं तव॥ त्यक्तो
मया यथेच्छं त्वं गच्छ वा तिष्ठ वाधुना॥२१॥ इत्युक्तः स मया शिष्यो लज्जितः पापकृत्तमः॥ गंतुं मतिं
स्वीकृतवान् विहायान्यत्र काशिकां॥२२॥ काशीं परित्यज्य गतो विदूरं विंध्याद्रिकूटं समवाप्य चापं॥ तप
श्चचाराशु विशुद्धिकारणं वर्षत्रयं पत्रतृणादिभुक् परं॥२३॥ त्यक्त्वाद्रिकूटं च ततः प्रयातो गोदावरीं भीम

रश्वीं ततोपि॥ तत्रापि तस्यासुचिरं धृतव्रतोन शर्म लेभे सुकृतैकसाध्यं॥ २४॥ ततः श्रीशैलमगमद्दृष्टुं स्वा
मिनमव्ययं॥ स्थित मग्रे विभुं स्कंदं दृष्ट्वा शेन तवान्मजं॥ २५॥ तत्रैव वसतिं चक्रे तपः शुद्धं चकार च॥ का
श्यां कृतानां पापानां शुद्धये धर्मवृद्धये॥ २६॥ एवं बहुतिथे काले ह्यगस्त्यः कुंभसंभवः॥ काशीविरहदुःखे
न विह्वलः समुपागतः॥ २७॥ हा काशि काशि हा काशि काशि हे काशि केति च॥ बहुधा व्याकुलीभूत्वा पठन् स्कंदमु
पागतः॥ २८॥ वारं वारं श्रवणतः काशीनामामृतस्य हि॥ मयादृष्टः काशिवासी ह्यगस्त्यः स्कंद एव च॥ २९
नानातपोभिरत्युग्रैर्नेमया स्कंद ईक्षितः॥ काशीनामानलेनाशु दग्धपापोहि दृष्टवान्॥ ३०॥ इति मामुक्तवा
न्पूर्वं पुनः दृष्टो मयाव्ययं॥ पुनरूचे तपोः शुद्धं संवादं काशिसंमतं॥ ३१॥ अगस्त्यमागतं दृष्ट्वा स्कंदः प्रीतम
नाभवत्॥ स्कंद उवाच॥ आगच्छ गच्छ मां शीघ्रं परिष्वज महामुने॥ ३२॥ काशिकाविरहात्त्वां तु जाने व्याकु
लमानसं॥ ज्ञानिनामपि धीराणां योगिनां सुतपस्विनां॥ ३३॥ काशीविरहजं दुःखं बाधते विदुषां किल॥
जडानां देहगेहादिप्रीतियुक्तमनोधियां॥ ३४॥ अन्यप्रदेशवत्काशी भाति नित्यं दुरात्मनां॥ त्वं काशीवास

तुंजनानां॥ नजातिशीलंसुकृतंवापिदृष्टंज्ञानामृतंपृच्छसिशंकरश्रुतौ॥४४॥ पुराणशास्त्रश्रुतिधर्मशास्त्रविद्भिर्नृभिर्गदितंधर्मसाध्यं॥ आशामात्रंसाधनंनः कृपालोनोवाधर्मसांख्ययुक्तंनयोवा॥४५॥ दीनानहंकारविकारहीनानप्रयातिकाशीपतिराद्दतान्मा॥ दीनानाथैकशरणंक्षेत्रंसेत्रंसंश्रितं॥ प्राप्यतेनिरहंकारैराशापाशविवर्जितैः॥४६॥ अगस्त्यउवाच॥ प्रमादाद्यदिसूक्ष्मंवास्थूलंवापातकंनृभिः॥ कृतंकाश्यांतारकारेकथंतस्याशुनिष्कृतिः॥४७॥ स्कंदउवाच॥ अविमुक्तेकृतानांतुपापानांकुंभसंभव॥ नदृष्टानश्रुतावापिसासाच्छिवमुखादपि॥४८॥ निष्कृतिंस्थूलसूक्ष्माणांशिवोवेत्तिनचापरः॥ जैगीषव्यउवाच॥ इतिश्रुत्वास्कंदमुखाज्ज्ञानत्रासः स्वयंपुनः॥४९॥ सहसामामयागत्यप्रार्थयामासशंकरं॥ मयापिनश्रुतादृष्टाक्षेत्रपापकृतांनृणां॥५०॥ निष्कृतिः शर्वसर्वेशब्रूहिचेदस्तिशंकर॥५१॥ श्रीभगवानुवाच॥ जैगीषव्यमुनेत्वंमेभक्तः परमतापसः॥ श्रुतिस्मृतिपुराणज्ञः काशीतत्वविदांवरः॥५२॥ तवाग्रेकथयिष्यामिकाशीमाहात्म्यमुत्तमं॥ प्रायश्चित्तंनास्तिकिंचित्क्षेत्रपापकृतां

नत्वत्तः शंकराचेनतत्परः॥३५॥ देवैः स्वकार्यनिरतैः कर्मरूपैर्विवासितः॥ काश्यां वसतियः कश्चि
त्काशीं पश्यतियश्च हि॥ ३६॥ काशीं स्मरतियः कश्चित्सपूज्यो मम सर्वदा॥ इत्युक्त्वा पूजितस्तेन स्वामि
नामुनिसत्तमः॥ ३७॥ दत्वान्नमन्नपानादि सर्वं पप्रच्छ कुंभजं॥ स्कंद उवाच॥ वदस्वागस्त्य शुद्धात्मन्कं
कामं करवाम ते॥ ३८॥ न चास्मद्दर्शनं प्राप्य शोचितुं त्वमिहार्हसि॥ अगस्त्य उवाच॥ जय देव महादेव
तनयानंददायक॥ ३९॥ वाराणसीं प्राप्य यत्त्वयदि तुष्टोसि षण्मुख॥ स्कंद उवाच॥ त्वं प्राप्स्यसि महा
बुद्धे विश्रांते काशिकां शुभां॥ न वापि कर्मगहन काशीं त्यक्त्वात्र तिष्ठसि॥ ४०॥ न ज्ञायते सूक्ष्मतरं हि किं
चित्कर्मास्ति लोकस्य सुदुर्विभाव्यं॥ योगादियज्ञादितपोभिरुग्रैर्युक्तस्य ते संप्रति नास्ति काशी॥ ४१॥ न
ज्ञायते सूक्ष्मतरं हि पुण्यं नो चापि काश्यां तनुभृत्सदास्ते॥ देवादयोपि प्रभवंति नैव स्थातुं क्षणं काशि
कायां कुगर्वाः॥ ४२॥ विश्वेश विश्वेश शरण्य शंभो नान्या गतिस्त्वत्पदाब्जं विहाय॥ अनेकतापा
ग्निज्ञानसानामस्माकमाकाशितदानदक्ष॥ ४३॥ त्वयाकृते पंजनतापशांतये प्रयाम्यतं पापवि

र्तिविहीनानां पाननास्तिसुदारुणा ॥ ६४ ॥ ज्ञानस्वरूपाकाशीयंपंचक्रोशपरिमिता ॥ तस्याःप्रदक्षिणां
कृत्वानरःपापैःप्रमुच्यते ॥ ६५ ॥ ममब्रह्ममयंलिंगंआपातालात्समुत्थितं ॥ सत्यलोकोपरिगतमत्यलि
दशांगुलं ॥ ६६ ॥ आजन्मसंचितैःपापैःमुच्यतेतत्प्रदक्षिणात् ॥ क्षेत्रेकृतानांपापानांप्रायश्चित्तंनचेतर
त् ॥ ६७ ॥ प्रदक्षिणद्वयंकृत्वादशजन्मकृतादघात् ॥ मुक्तोभवति पापात्मासद्योमोक्षमवाप्नुयात् ॥ ६८ ॥ शु
भकृद्यदिकुर्याद्विमोहात्पापंनतस्यतत् ॥ क्षेत्रंप्रदक्षिणीकृत्यभवेत्पापोहिविज्वरः ॥ ६९ ॥ प्रदक्षिणत्रयं
कृत्वापापंजन्मशतार्जितं ॥ विलयंचप्रयात्येतन्नात्रकार्याविचारणा ॥ ७० ॥ यावज्जीवंवसेत्काश्यांप्रत्य
ब्दंसुप्रदक्षिणं ॥ कुर्यादेवनिरालस्योज्ञानंदसदनस्यहि ॥ ७१ ॥ प्रत्यब्दंयेप्रकुर्वंतिपंचक्रोशप्रदक्षिणं
॥ जीवन्मुक्तास्तएतेपानिःपापाःकाशिवासिनः ॥ ७२ ॥ ॥ इतिब्रह्मवैवर्त्तेउत्तरभागेपंचक्रोशीमाहा
त्म्येद्वितीयोध्यायः ॥ २ ॥ ॥ श्रीमहादेवउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनं ॥ ऋषिःकूष्मा
डननयोमंडपःसंगदोषतः ॥ १ ॥ बालएवमम क्षेत्रेपापंचरतिवेदविन् ॥ पित्रानिवारितोमात्राभ्रात्रा

नृणां॥ ५३॥ अस्ति चैकं सुगोप्यं हि त्वदग्रे कथयाम्यहं॥ प्रायश्चित्तं नान्यदस्ति मुने ज्ञानं विना क्वचित्॥
५४॥ ज्ञानं च दुर्लभं नृणां विषयासक्तचेतसां॥ तज्ज्ञानं काशिकायां हि साक्षाद्भवति देहिनां॥ ५५॥ देहाभिमा
निनां सौख्यं ऋषिणामपि दुर्लभं॥ अत्रानंदवने ज्ञानं आच्छादयति दुर्मतिः॥ ५६॥ स्वल्पेनाच्छाद्यते ज्ञानं
अंगुल्या सूर्यवत्खलु॥ तस्मात्त्वमिव पो धीर सभवेत् ज्ञानभाजनं॥ ५७॥ न जितेंद्रियता लोके न वैराग्यं न त
पिन॥ विविक्तसेवा सत्संग श्रवणाद्यपि दुर्लभं॥ ५८॥ अन्यान्यपि मुमुक्षूणां साधनानि महांति च॥ भवं
ति कानि चिद्दैषेन चान्यत्राद्दतात्मनां॥ ५९॥ भवंति काश्यां सफलानि तानि मोक्षावसानानि सुसाधनानि
॥ सदा सदानंदवने ममालये मया सहायेन सुसाधितानि॥ ६०॥ काश्यां स्थितानां जंतूनां अविचारितक
र्मणां॥ न सुखं न परा शांतिस्तस्मात्काश्यां विचार्य कृत॥ ६१॥ सुखमाप्नोति परमं परां शांतिं प्रयाति हि॥ प्रा
यश्चित्त विहीनानां न शांतिः कुत्रचिद्भवेत्॥ ६२॥ किं पुनः काशिकामध्ये पापं कृत्वा सुखी भवेत्॥ ब्रह्म
हत्यादि पापानां प्रायश्चित्तं हि काशिका॥ ६३॥ काशिकायां कृते पापे प्रायश्चित्तं न विद्यते॥ प्रायश्चि

श्रोत्रियवंशजः ॥२॥ असत्संगंत्यजतिनो विषयासक्तमानसः ॥ परदारपरद्रव्यपरद्रोहरतः सदा ॥
३॥ परापवादकुशलो वेदवादविवर्जितः ॥ यथा यथा वयस्तस्य वृद्धिं प्राप सुदुर्मतेः ॥४॥ तथा
तथा पापरतः सत्संगविमुखः सदा ॥ अपवित्रैस्त्रिभिर्मित्रैः संवृतो राजवेश्मनि ॥५॥ प्रविष्टो धन
मादाय चौर्येण स विनिर्गतः ॥ वेश्यागृहे तन्निक्षिप्य तपास हदिवानिशं ॥६॥ रमते मंडपो विप्रः पितृ
विप्रत्वनाशकः ॥ कदाचिद्रममाणो सौ तृषार्तः समपद्यत ॥७॥ मंचाधस्तात्मपात्रस्थां गृहीत्वा पीतवा
न् सुरां ॥ जलबुध्या पातकं तज्ज्ञानं तदविचारतः ॥८॥ किमेतद्धि मया पीतमिति वेश्यां स पृष्टवान् ॥ त
माह सा मया नीतं सुरापात्रं सुसौख्यकृत ॥९॥ त्वदर्थे संभृतं मद्यं पुनः पिब सकृत्सकृत ॥ इति वेश्यावचः
श्रुत्वा धिग्धिक् पापं मया कृतं ॥१०॥ वेश्यासंगेन मदिरा पीता ब्राह्मणसूनुना ॥ मंडपस्ततो मित्रद्व
यमासीत्सुदुःखितं ॥११॥ वेश्यामुखात्सुरापानं तस्य श्रुत्वा जगर्हतुः ॥ आदौ विप्रस्ततो स्माकं संगी पा
परतः सदा ॥१२॥ सुरापानं ततो जातं ततस्त्वं किं करिष्यसि ॥ आच्छादयावः पापं ते सुवर्णं देहि नो बहु

॥१३॥ तथेत्युक्त्वा पुनर्वेश्यागारं गत्वा प्रतिश्रमः॥ सुवर्णं याचयामास तनाऽयामास तं च सा ॥१४॥ वे
श्योवाच॥ वराक मम लीलायाः स्वादं ज्ञात्वापि मूर्खवत्॥ सुवर्णं याचसे किंत्वं दास्यमात्रं किमन्मम ॥१५॥
त्वं वने चं वने लक्षं बहुभ्यः प्राप्तमद्य वै॥ त्वं मयोपेक्षितो दीनो दत्वा यार्थय स धनं॥१६॥ कामशास्त्रं त्वया
मूढ पठितं न कदाचन॥ यतो लीलां न जानासि मम कंदर्पमोहिनीं॥ १७॥ गच्छ गच्छ सुखेनाशु यावद्दा
स्यो न संति मे॥ ताडयिष्यंति सर्वास्त्वां निर्लज्जं ब्राह्मणाधमं॥१८॥ वेश्यागृहात्ततस्तूर्णं क्षुधितोपि पिपा
सितः॥ पितुः सकाशमगमन्मातुश्चापि पकाम्यया ॥१९॥ दृष्टतो दारकौ प्राप्तौ मित्रत्वे परिकल्पितौ॥ वदं
तौ देहि कनकं अस्मदंशं त्वमाशु वै॥२०॥ राज्ञो गृहाद्यदानीतं स्तेयेनास्माभिरुत्तमं॥ इति श्रुत्वा पिता
तस्य महादुःखसमन्वितः॥ २१॥ उवाच दारकौ भीतः कौ युवां केन कर्मणा॥ कौ भवंतौ कथं संगः कृतो ने
न दुरात्मना॥२२॥ तद्धिरण्यं हि कुत्रास्ते परद्रव्यं वां व्यवस्थितौ॥ दारकावूचतुः॥ अहं कुविंदस्त्वत्पुत्रो मंड
पानापितस्त्वयं॥२३॥ मैत्री त्रयाणां संजाता देवाद्यो पत्रयात्मिका॥ विभज्य भागाः सर्वे हि ग्राह्या इति निर्वि धि

कृतः॥२४॥ अनेन वेश्याभवने निरिष्टं त्वमेव हि॥ मानप्रपन्नकृतिमुने वेश्या वादविवादिनी॥२५॥ अतः
परं राजगृहं गंतव्यं वक्तुमेव हि॥ देहि द्रापय वास्माकं धनं शीघ्रं हि दुःखदं॥२६॥ नोचेत्तव वाग्मजः सा श्रोमूलप्रे
तो भविष्यति॥ रसपुत्रं तयास्मा त्वात्मानमपि वा नघ॥२७॥ कूष्मांड उवाच॥ आगच्छत मया सार्द्धं राजरा
जस्य संनिधौ॥ पुत्रं गृहीत्वा गच्छामि शास्त्यर्थं धर्मतो यथा॥२८॥ राजभिः कृतदंडास्तु शुध्यंति मलिना नराः॥ अ
निर्वेशकृतः पापा गच्छंति नरकं मृताः॥२९॥ दारका वूचतुः॥ पुत्रं समर्पय मुने किमर्थं त्वं गमिष्यसि॥ राज्ञा गृहे
विवादार्थं न गंतव्यं कदाचन॥३०॥ कूष्मांड उवाच॥ भवत्सहनसंबंधं दत्त्वा कानीयतां सुतः॥ नोचेदहं गमिष्यामि
राजवेश्म सुनिश्चितं॥३१॥ दारकावूचतुः॥ त्वया सह न संबंधो देहि मित्रद्रुहं शठं॥ अस्माभिरेव गंतव्यं त्वं ज्येष्ठ
स्त्विह लज्जितः॥३२॥ कूष्मांड उवाच॥ पुत्र गच्छ द्विजश्रेष्ठ द्विजकृत्यं त्वया कृतं॥ प्रायश्चित्तं विधायाशु राज्ञा दत्तं न
चान्यथा॥३३॥ आगंतव्यं त्वया वत्स नो चेद्याहि यथासुखं॥ तावन्नाहं तव पिता न सुतस्त्वं ममाघवान्॥३४॥ ईश्वर उवा
च॥ जैगीषव्य मुनिश्रेष्ठ तेन विप्रेण मंडपः॥ समर्पितस्तयोः पुत्रस्नेहमुन्मुच्य दूरतः॥३५॥ धार्मिकाणां धनैः पुत्रैः

कलत्रैः किं प्रयोजनं॥ धर्मसंग्रहशीलानां पतस्ते काशिवासिनः॥ ३६॥ पुत्रो भ्राता पिता वापि यः काश्यां पापमा
चरेत्॥ त्याज्यः स वस पापात्मा भवेत्संसर्गजाड्ययं॥ ३७॥ ततो नीत्वा तौ दूरदेशं ताडयामासतुः क्रमं॥ स ताड्यमानो
मूर्च्छां तु प्राप मृत्युसमां मुने॥ ३८॥ मृतोयमिति चोत्सृज्य ययतुस्तौ विषण्णवत्॥ पश्चात्तापेन संयुक्तौ वसिसं
गमसन्निधौ॥ ३९॥ त्यक्त्वा विप्रसुतं भीतौ गतौ सिद्धेश्वरालयं॥ तत्रोषित्वा तु तां रात्रिं दुःखितौ सुपिनौ भृशं॥ ४०
॥ पश्चात्तापपरौ तौ तु पुनरन्वेषितुं गतौ॥ मृतो वा जीवति तु वा ज्ञात्वा देशं त्यजावहे॥ ४१॥ यावद्विचारणपरा
वागतौ वसिसंगमे॥ तावद्द्विजसुतो भीतो गतमूर्च्छः प्रतस्थिवान्॥ ४२॥ पंचक्रोशात्मकस्यैव शिवलिंगस्य
तद्दिने॥ प्रदक्षिणं प्रकुर्वंति शिवमाहात्म्यवेदिनः॥ ४३॥ क्षेत्रप्रदक्षिण कृतां तत्संगेन विनिर्गतः॥ तस्मिन्दिने
कर्दमेशसन्निधौ पात्रिणः स्थिताः॥ ४४ सोपि तत्र स्थितो विप्रो मंडपो मंडपो भवत्॥ रात्रौ जागरणं तेन कृतं तत्रत्यपि
वाग्रतः॥ ४५॥ सर्वैः प्रोत्साहितः साधु साधु साध्विति सार्धिति॥ अयं परमशैवस्य कूष्मांडस्य तु मंडपः॥ ४६॥
पुष्कैः शिवव्रतधरः साधु नृत्यति गायति॥ ततस्तेन स्थितं कोपि तन्मध्ये वेति निश्चितः॥ ४७॥ अत एव वादनैः सद्भिर्भि

र्कीदृष्ट्वाबहिर्गतां॥ सोपिचारुविचित्रांगः सर्वेषांसुमनोहरः॥४८॥ बभूवसद्भक्तिपरः सत्संगेनद्विजोत्तमः
॥विचार्यमनसिश्रेष्ठंवंशिवभक्त्यासतांप्रियः॥४९॥ ततोस्मिन्दुष्टोपिसदापंचपातकसंयुतः॥ साधुवादः सतां
श्रेष्ठोभवतिप्रत्यहंमम॥५०॥ धनधान्यादिलब्धिश्चभोजनाच्छादनानिच॥ अनायासेनलभ्यंतेऋजुमार्गेण
नित्यदा॥५१॥ शिवेभक्तिः सतांतुष्टिर्देहपुष्टिर्निराकुला॥ येनमार्गेणभवतिसमार्गः सर्वसंमतः॥५२॥ एवंविचार
यन्सोयंचंडिकांप्रापमंडपः॥ तत्रपूजांभीमचंड्याः कृत्वाकाशिनिवासिभिः॥५३॥ ब्राह्मणैर्भोजितः सम्यग्
दत्त्याशिवभक्तिकृत्॥ उपविष्टास्ततोरात्रौदेव्याः पुरतआदरात्॥५४॥ क्षेत्रमाहात्म्यकथनंश्रवणंचक्रुरुत्सुकाः
॥ततोविष्णुजनाः शैवाः कीर्तनंचक्रुरादृताः॥५५॥ तन्मध्येमंडपः शौंडोनृत्यंगानंचकारह॥ साधुवादेनमहता
पुनस्तैः साधुसत्कृतः॥५६॥ तस्यापिहिमनोब्रह्मञ्छिवेमपिसमाहितं॥ अथरात्रौपरेद्युस्तेमार्गएवसमंडपः॥
५७॥ नृत्यन्गच्छतिगायन्सस्वपमेवशिवस्वयं॥ पदेपदेदक्षिणतः क्षेत्रस्यममसद्द्विजः॥५८॥ ब्रह्महत्यादि
पापानांप्रायश्चित्तंभवेद्यथा॥ महादेवमहादेववासुदेवशिवेतिच॥५९॥ स्मरन्नृत्यन्सभोम्हणंसस्तैरपिबहिः कृतः॥

तृतीये दिवसे गत्वा नंदेहलिविनायकं॥ ६०॥ पूजयामास सुव्यग्रः काशीभक्तिविवृद्धये॥ मंडपो लौल्यरहितः शिवनामपरायणः॥ ६१॥ बलादन्नमपि त्यक्त्वा हरिकीर्तनतत्परः॥ नाश्नाति न पिबत्यंभो न कस्यापि वशे स्थितः॥ ६२॥ निर्द्वंद्वः समदृक् शांतो बभूवागतसाध्वसः॥ ब्राह्मणेन मया स्तेन्यं सुवर्णस्य कृतं रहः॥ ६३॥ वंचितश्च पिता मान्यो माता साध्वी च वंचिता॥ पापेनोपार्जितं वित्तं वेश्यावेश्मनि तिष्ठति॥ ६४॥ मनसा विप्रहननं गमनं भर्तुरेव च॥ संपन्नं च सुरापानं साक्षाद्वेश्यागृहे ण किं॥ ६५॥ आहारो मैथुनं निद्रा मिथ्यावादादयोपि हि॥ जाता मम वराकस्य कथं पापपरिक्षयः॥ ६६॥ अनुतापैः सुसंतप्तो मंडपो मंडवर्जितः॥ क्षेत्रप्रदक्षिणं कुर्वन्निःपापः समपद्यत॥ ६७॥ कचिद्रुदति संस्मृत्य संस्मृत्य स्वाघसंचयं॥ कचिद्धसति क्षेत्रस्य प्रदक्षिणकृदित्यहं॥ ६८॥ काशी काशीति काशीति शिव शंकर केशव॥ पाहि मां पतितं दीनं गुरुदेवापराधिनं॥ ६९॥ रामेश्वरं समागम्य स्नात्वा संतर्प्य देवताः॥ रामेश्वरं समभ्यर्च्य सोमनाथं तथार्च्य ह॥ ७०॥ रामं राजीवपत्राक्षं सीतालक्ष्मणसंयुतं॥ न भुंक्ते न पिबत्यंभो नृत्यगीतादितत्परः॥ ७१॥ प्रार्थ्यमानोपि गृह्णाति न किंचिदपि स्वेद

कृत्॥ ततः प्रचलिताः सर्वे यात्रिणः शिवतत्पराः॥७२॥ मंडपोपि स्मरन् काशीं शिवं विष्णुं प्रतस्थिवान्॥
वृषभध्वजमागत्य स्नात्वा वै कापिले ह्रदे॥७३॥ देवं संपूज्य विधिवत् स्थित्वा तत्र च पूर्ववत्॥ ततः प्रभाते
वरुणासंगमे स्नानमाप्य च॥७४॥ गताः सर्वे विश्वनाथं द्रष्टुं श्रीपार्वतीपतिं॥ तत्र स्थित्वा महापूजां कृत्वा
सर्वे महाजनाः॥७५॥ अन्नानि वासो रत्नानि ददुः शंकरतुष्टये॥ मंडपोपि तथा कृत्वा मोक्षमंडपमध्यतः
॥७६॥ साष्टांगं प्रणतः प्राह तत्सद्गोमध्यगोऽघकृत्॥ मया पापानि सर्वाणि सुमहांति बहूनि च॥७७॥ कृता
नि तत्र वद त्वं निष्कृतिं मम सत्तमाः॥ यथाहं पापनिर्मुक्तो भवामीह तदुच्यतां॥७८॥ सदस्या ऊचुः॥ त्वं निः
पापोसि भक्तोसि शिवयोः केशवस्य च॥ पंचक्रोशात्मकं लिंगं सत्संगाद्दर्शितीकृतं॥७९॥ मैत्री वाणिज्य
मृत्याद्यैः किं पुनः श्रवणादिभिः॥ येन केनापि सुमहत्पापं तस्य न विद्यते॥८०॥ मंडप उवाच॥ पित्रा
निष्कासितः सोहं कथं यास्यामि तद्गृहं॥ प्रतीतिकरणं किंचिदस्ति चेद्ब्रूत मनेमम॥८१॥ प्रेषयंतु तदा स
भ्याः शास्त्रप्रत्ययसंयुताः॥ गर्हयंति गृहस्थानो नो चेत्किं गमनेन मे॥८२॥ सदस्या ऊचुः॥ आकार

यस्त्वपितरं अस्मद्वचनगौरवात्॥ प्रतीतिं दर्शयामोद्य दंडनाथस्य सन्निधौ॥८३॥ महादेव उवाच॥ मं
डपोथ गृहद्वारं गत्वा शिव शिवेति च॥ महादेव महादेवेत्युक्त्वा तूष्णीं व्यवस्थितः॥८४॥ कूष्मांडः प्राह दृप्ति
ताको नितिथिर्द्वारि वर्तते॥ पश्य पश्यासु सुभगे शिववाक् शंकरप्रियः॥८५॥ सा भर्तुर्वचनाद्गत्वा दृष्ट्वा मंडप
मात्मजं॥ उवाच वचनं भीता भर्तुः प्रत्यर्थमातुरा॥८६॥ अकृत्वैव च निर्वेशं कथमागमनं वद॥ मंडप उवाच
॥ आहूय तं तिसद स्यास्त्वां पितरं च ममानघ॥८७॥ निर्वेशवार्ता बहुलां तस्यैव ब्रू पुरग्रतः॥ जननी मंडपस्या
थ गत्वा कूष्मांडमब्रवीत्॥८८॥ पुत्रस्ते कृतनिर्वेशः शिवस्मरणतत्परः॥ द्वारि तिष्ठति सद्वेषो नातिथिः क
श्चनेतरः॥८९॥ कृतनिर्वेशमनघं श्रुत्वा पुत्रं तु स द्विजः॥ उत्थायागत्य सहसा ददर्श शिवरूपिणं॥९०॥
रुद्राक्षमालिनं शांतं विभूतिकृतभूषणं॥ उवाच किं समायातः शीघ्रं पुत्रं तथापवान्॥९१॥ नहि स्वल्पे
न पुण्येन प्राप्यस्त्वितं महद्भवेत्॥ मंडप उवाच॥ मया बहूनि पापानि कृतानि विविधानि च॥९२॥ नत्वा पं
ते त्व पापित्रा किमन्यैर्दूरसंस्थितैः॥ बलात्त्वामाह्वयं त्येव सदस्याः शुद्धिदर्शिनः॥९३॥ पद्मो च तेकुरु

तथा त्वमस्मद्गेहेन मा व्रज॥ इति श्रुत्वा मंडपस्य वचः पत्न्या समन्वितः॥१४॥ मुक्तिमंडपिकां प्राप सदस्यैः
संस्थितां शुभां॥ तैराहूतो द्विजवरैर्धर्माधर्मार्थदर्शकैः॥१५॥ उपविष्टं तमूचुस्ते पुत्रस्ते शुद्धिमागतः॥
कूष्मांड उवाच॥ प्रायश्चित्तेन केनासौ शुद्धिं प्राप्तो ममात्मजः॥१६॥ प्रतीतिर्मम वा कस्माद्येनेन तु भुज्यते
॥सदस्या ऊचुः॥ मुक्तिमंडपिकापास्तु स्वामी विष्णुर्न चापरः॥१७॥ स चेद्वदति वेदात्मा न दाशंकां न
चोत्तरं॥ तत्पार्षदा भानुमुख्या वदिष्यंति च सत्तम॥१८॥ तदा मन्यस्व सुमी नः शास्त्रैर्वप्रसादतः॥
इत्युक्त्वा च सदस्यास्ते तुष्टुवुर्विष्णुमव्ययं॥१९॥ रविर्दुंढिर्दंडपाणिर्भैरवश्चैव पंचमं॥ पंचापि तत्र सु
प्रीताः मुक्तिमंडपमध्यतः॥१००॥ प्रादुर्भूता महात्मानो लोकप्रत्ययकारकाः॥ विष्णुरुवाच॥ अयं शु
द्धो महापापो मंडपः साधुसंगतः॥१॥ काश्याः प्रदक्षिणं कृत्वा ह्यर्चयित्वा जगद्गुरुं॥ माहात्म्यश्रवणं जा
तं क्षेत्रस्याशुभनाशनं॥२॥ तस्मादयं गच्छतु स्वं गृहं पितृसमन्वितः॥ दुंढिरुवाच॥ काशीति नाम ज
पतां शिवनामतुल्यं विघ्नादिपापनिचयो विलयं प्रयाति॥ किं तत्कथाश्रवणकीर्तनवासदानैः सम्यक्

प्रदक्षिणवनामशुभस्य नाशः॥३॥दंडपाणिरुवाच॥काश्यां पापं ये प्रकुर्वंति पापास्ते यांदुःखं जायं
तिदस्यमेव॥शंभोर्लिंगं सच्चिदाकाशरूपं पंचक्रोशं तत्परिक्रम्य शुद्धः॥४॥भैरवउवाच॥कार्यं मयैतत्
त्वलु पापिनां सदा करोमि दंडं बहुधावश्यमेव॥प्रदक्षिणीकृत्यसमागतस्त्वयं काशीं विशुद्धो न विचा॥
रमस्मिन् तु॥५॥रविरुवाच॥सत्संगतः क्षेत्रसुदक्षिणीकृतं काशीकथाश्रवणकीर्तनादयं॥शुभप्रदं पा
पहरं सुवासदं कृतं च शुद्धो मंडपः सत्यमेव॥६॥महादेवउवाच॥सभासदैर्देववरैरुक्तो कुष्मांडमंडपे॥
प्रदक्षिणीकृत्य तु तान्नमस्कृत्य पुनः पुनः॥७॥निःपापैर्हर्षसंपूर्णो ययतुस्तौ स्वमालयं॥प्रदक्षिणफलं
ब्रह्मन् पंचक्रोशात्मकस्य हि॥८॥लिंगस्य परमपाप्रोक्तं सुगोप्यं पुरुषार्थदं॥श्रुत्वा माहात्म्यमतुलं पं
चक्रोशात्मकस्य च॥९॥लिंगस्य दक्षिणा कार्या त्वया शिष्येण चानघ॥इति श्रुत्वा प्रसन्नात्मा जैगीष॥
व्यो महामुनिः॥१०॥एवं प्रदक्षिणीकृत्य नमस्कृत्य पुनः पुनः॥जगाम पंचक्रोशस्य यात्रार्थं शिष्यसंयुतः
॥११॥पंचभिर्दिवसैः कृत्वा यात्रामत्रागतो मुनिः॥उपविष्टो विधिः सम्यक् यात्रायाः पापनाशनः॥१२॥

मयापुण्यकृदेवापि निर्विघ्नफलदायकः ॥ मुनिरागत्य विश्वेशं भवान्या सहितं तदा ॥ १३ ॥ पूजयामास सवि
धिवदुपचारैः सुविस्तरैः ॥ शिष्यो गुरुप्रसादेन निःपापो पुण्यवान्सुधीः ॥ १४ ॥ जातः स्कंदप्रसादेन श्रुत्वा
माहात्म्यमुत्तमं ॥ महादेव उवाच ॥ एतत्ते कथितं देव काश्यां पत्यानकं स्तुतं ॥ तस्य प्रणाशनं शुद्धं प्रायश्चितं
सुदुर्लभं ॥ १५ ॥ श्रुत्वाध्यायमिमं पुण्यं सर्वपापप्रणाशनं ॥ नरः शुद्धिमवाप्नोति काशीवासं च गर्भहृत् ॥ १६
॥ इति श्रीब्रह्मवैवर्ते तृतीयविभागे पंचक्रोशीमाहात्म्ये तृतीयोध्यायः ॥ ३ ॥ ॥ ऋषय ऊचुः ॥ सूत सूत महा
बुद्धे वदविद्याविशारद ॥ यथा प्रदक्षिणा कार्या मनुजैर्विधिपूर्वकं ॥ १ ॥ स्थानं वासस्य वदनो भक्ष्यं चाभक्ष्य
मेव च ॥ पूजां तस्मिन्स्थितानां च देवानां दानमेव च ॥ २ ॥ यथा संपूर्णनामेति यात्रा क्षेत्रेस्य सत्तम ॥ सूत
उवाच ॥ एवमेव पुरा पृष्टो भगवान् शिवया शिवः ॥ ३ ॥ तत्त्वं ब्रवीमि मुनिश्रेष्ठाः शृण्वंतु विधिवन्मम ॥
श्रीदेव्युवाच ॥ भगवन् देवदेवेश प्रदक्षिणविधिं वद ॥ ४ ॥ पंचक्रोशस्य येनासौ निष्पापः पुण्यवान्
भवेत् ॥ श्रीमहादेव उवाच ॥ आश्विनादिषु मासेषु त्रिषु पार्वेति सत्तमे ॥ ५ ॥ प्रदक्षिणा प्रकर्तव्या क्षेत्रस्य

पापकांस्त्रिभिः॥ माघादिचतुरोमासाः प्रोक्तायात्राविधौनृणां॥६॥ पूर्वस्मिन्दिवसेढुंढिंपूजयित्वाहवि
ष्यभुक्॥ प्रातरुत्तरवाहिन्यांस्नात्वाविश्वेशमर्चयेत्॥७॥ पुनर्यात्रार्थमपिचशिवयोःपूजनंभवेत्॥ मु
क्तिमंडपिकायांचसंविश्यवरवर्णिनि॥८॥ प्रतिज्ञांमहतींकृत्वापूजनंतत्रतत्रह॥ काश्यांप्रजानवाक्काय
मनोजनितमुक्तये॥९॥ ज्ञाताज्ञातविमुक्त्यर्थंपातकस्याहितापच॥ पंचक्रोशात्मकंलिंगंज्योतिरूपंसना
तनं॥१०॥ भवानीशंकराभ्यांचलक्ष्मीश्रीशविराजितं॥ ढुंढिराजादिगणपैःषट्पंचाशद्भिरावृतं॥११॥ द्वा
दशादित्यसहितंनृसिंहैःकेशवैर्युतं॥ कृष्णरामत्रययुतंकूर्ममत्स्यादिभिस्तथा॥१२॥ अवतारैरनेकै
श्चयुतंविष्णोःशिवस्यच॥ गौर्यादिशक्तिभिर्जुष्टंसत्रंकुपात्परक्षिणं॥१३॥ बद्धांजलिःप्रार्थयीतमहादे
वंमहेश्वरीं॥ पंचक्रोशस्ययात्रांवैकरिष्येविधिपूर्वकं॥१४॥ प्रीत्यर्थंतवदेवेशसर्वाघौघप्रशांतये॥
इतिसंकल्प्यमौनेनप्रणिपत्यपुनःपुनः॥१५॥ ढुंढिराजगणेशानमहाविघ्नौघनाशनः पंचक्रोशस्ययात्रा
र्थंदेह्याज्ञांकृपयाविभो॥१६॥ विश्वेशंत्रिःपरिक्रम्यदंडवत्प्रणिपत्यच॥ मोदंप्रमोदंसुमुखंदुर्मुखंग

गनायकं॥१७॥ प्रणम्य पूजयित्वादौ दंडपाणिं ततोर्चयेत॥ कालराजं च पुरतो विश्वेशस्य जग
द्गुरोः॥१८॥ पूजयित्वा ततो गच्छेन्मणिकर्णीं विधानतः॥ तत्र स्नात्वा महादेवं मणिकर्णीशमर्चये
त॥१९॥ विनायकं सिद्धिसंज्ञं पुनरागत्य पूजयेत॥ मणिकर्णीतटे गच्छन्गंगाकेशवमप्युत॥२०॥ल
लितां च ततः पूज्य जरासंधेश्वरं विभुं॥ सोमनाथं ततः पूज्य दालभ्येश्वरमेव च॥२१॥ शूलटंकेश्वरं लिं
गं वाराहं पूज्य च व्रजेत॥ दशाश्वमेधलिंगं च बंदीं नत्वैव पूजयेत॥२२॥ सर्वेश्वरं च केदारं ततो हनुम
दीश्वरं॥ संगमेशं ततः पूज्य लोलार्कं पूजयेत्ततः॥२३॥ अर्कसंज्ञं गणाध्यक्षं असेस्तीरे पुनर्व्रजेत॥ क्षे
त्रप्रदक्षिणां कुर्वन्तिलमात्रं न संत्यजेत॥२४॥ दुर्गाकुंडे नरः स्नात्वा यजेद्दुर्गविनायकं॥ दुर्गां संपूज्य वि
धिवत वसेत्तत्र सुखाश्रये॥२५॥ ब्राह्मणान् भोजयेत्तत्र मधुपायसलड्डुकैः॥ रात्रौ जागरणं तत्र पुराण
श्रवणादिकं॥२६॥ कुर्याच्च कीर्तनं भक्त्या परोपकरणादि च॥ जय दुर्गे महादुर्गे जय काशीनिवासिनि
॥२७॥ क्षेत्रविघ्नहरे देवि पुनर्दर्शनमस्तु ते॥ इति दुर्गां प्रार्थयित्वा विघ्नकूसेनेश्वरं ततः॥२८॥ पूजयि

त्वा कर्दमेशं पंचक्रोशीति लिंगे नमेत्॥ आदौ कर्दमतीर्थं तु स्नानं कूपावलोकनं॥ २९॥ सोमनाथं विरूपाक्षं नी
लकंठं ततोर्चयेत्॥ तत्र वासं विधायाग्नौ किंचिद्धोमं द्विजार्चनं॥ ३०॥ श्राद्धादि विधिकृत्यानि कृत्वा मुच्येत
ऋणत्रयात्॥ कर्दमेश महादेव काशीवासजनप्रिय॥ ३१॥ त्वत्पूजनान्महादेव पुनर्दर्शनमस्तु ते॥ प्रातः
स्नात्वा पूजयित्वा समर्च्य च द्विजानपि॥ ३२॥ नागनाथं च चामुंडां मोक्षेशं करुणेश्वरं॥ वीरभद्रं ततो दुर्गां
विकटाख्यां प्रपूजयेत्॥ ३३॥ उन्मत्तभैरवं नीलं कालकूटं ततोर्चयेत्॥ दुर्गां च विमलां नत्वा महादेवं त
तो व्रजेत्॥ ३४॥ नंदिकेशं भृंगिरीटिं तत्रैव च गणप्रियं॥ विरूपाक्षं च यक्षेशं विमलेश्वरमेव च॥ ३५॥ मो
क्षदं ज्ञानदं चैवामृतेशं तत्र पूजयेत्॥ गंधर्वसागरं तीर्त्वा भीमचंडीं ततो व्रजेत्॥ ३६॥ तत्र स्नात्वा भीमचंडीं
पयसा स्नापयेत्सुधीः॥ पंचोपचारैः संपूज्य ब्राह्मणान् परितोषयेत्॥ ३७॥ तत्र वासं प्रयत्नेन कुर्याच्चंडविनि
पकं॥ रविरक्तासगंधर्वं नरकार्णवतारकं॥ ३८॥ शिवं प्रपूज्य यत्नेन रात्रौ पूर्ववदाचरेत्॥ प्रातरुत्थाय सु
स्नातः प्रार्थयेद्भीमचंडिकां॥ ३९॥ भीमचंडे प्रचंडानि मम विघ्नानि नाशय॥ नमस्तेस्तु गमिष्यामि पुनर्दर्शन

मस्तु ते॥४०॥ ततो गच्छेदेकपादं गणं नत्वाथ तंडुलान्॥ तिलांश्च विकिरेत्तत्र धनधान्यादिसंपदे॥४१॥ ततो गच्छेन्महाभीमं भैरवं भैरवीं शुभां॥ भूतनाथं च सोमेशं प्रपूज्य सिंधुरोपमं॥४२॥ कालनाथं कपर्दीशं कामेशं च गणेश्वरं॥ वीरभद्रं चारुमुखं गणनाथं प्रपूजयेत्॥४३॥ ततो गच्छेद्देहलीशं विघ्नपूगनिवारणं॥ मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः॥४४॥ पूजयेच्च द्रुपादेवं ततो देहलिविनायकं॥ तत्पार्श्वे षोडश पुनर्विघ्ननाथान् समर्चयेत्॥४५॥ उद्दंडगणपं पूज्य उत्कलेश्वरमेव च॥ रुद्राणपास्तु ततो भूमिं दृष्ट्वा रामेश्वरं व्रजेत्॥४६॥ वरुणापां ततः स्नात्वा तर्पणादि विधानतः॥ रामेश्वरं श्वेततिलैर्बिल्वपत्रादिभिर्यजेत्॥४७॥ सोमनाथं तु तत्रैव पूजयेद्दिंद्रदिग्गतं॥ भरतेशं लक्ष्मणेशं शत्रुघ्नेश्वरमेव च॥४८॥ द्यावाभूमिश्वरं तत्र पूजयेन्नहुषेश्वरं॥ तत्र वासं प्रकल्प्याथ पूर्ववज्जागरादिकं॥४९॥ कृत्वा स्नात्वाथ रामेशं पूजयेत्काशिवासदं॥ श्रीरामेश्वर रामेण पूजितस्त्वं सनातन॥५०॥ आज्ञां देहि महादेव पुनर्दर्शनमस्तु ते॥ लिंगानि सुबहून्यादौ वरणापारगान्यथ॥५१॥ पूजयित्वा ततो गच्छेद्देवसंघनिषेवितं॥ देवसंघेश्वरं किंचिद्दत्वा स्थित्वा ततो व्रजेत्॥

पं॰मा॰
१६

॥५२॥ पाशपाणिं गणेशं च क्षेत्रमध्ये व्यवस्थितं ॥ पूजयित्वा बहिश्चैव दृष्ट्वा श्वरमथो व्रजेत ॥५३॥ एकोश्व
मेधः पृथुना कृतः क्षेत्राद्बहिः पुरा ॥ स्वर्गभूमिस्तु सा ज्ञेया मोक्षभूमिस्तु मध्यतः ॥५४॥ काश्याश्चतुर्दिशं देवि
योजनस्वर्गभूमिका ॥ मृतास्तत्र हि गच्छंति स्वर्गं सुकृतिनां पदं ॥५५॥ ततस्तु यूपं हि सरः दृष्ट्वा गच्छेच्छनैः
शनैः ॥ महाक्षेत्रे कापिलं तु यत्र श्रीवृषभध्वजः ॥५६॥ तत्र स्नात्वा विधानेन तर्पयित्वा पितॄन्नथ ॥ श्राद्धं विधाय
सुश्रद्धः पूजयेद्वृषभध्वजं ॥५७॥ निवसेत्तं तु दिवसं पुराणादि प्रकल्पयेत ॥ प्रदक्षिणीकृत्य ततो गच्छेज्ज्वाला
नृसिंहकं ॥५८॥ एवं प्रदक्षिणीकृत्य सरः कापिलमुत्तमं ॥ वरुणां च ततस्तीर्त्वा स्नात्वा वै संगमे शुभे ॥५९॥
आदिकेशवमभ्यर्च्य संगमेश्वरमेव च ॥ विनायकं स्ववेसंज्ञं पूजयित्वा ततो व्रजेत ॥६०॥ क्रोडीकृत्य पवान
मुद्रान् विकिरन् विष्णुमुच्चरन् ॥ प्रल्हादेश्वरमभ्यर्च्य त्रिलोचनमतः परं ॥६१॥ बिंदुमाधवमभ्यर्च्य ह्रदे
पांचनदे शुभे ॥ गभस्तीशं मंगलां च गौरीं दृष्ट्वा ततो व्रजेत ॥६२॥ वसिष्ठवामदेवौ च पर्वतेश्वरमेव च ॥ मह
श्वरं समभ्यर्च्य ततः सिद्धिविनायकं ॥६३॥ सप्तावरणगान् दिव्यान् पूजयेद्गणनायकान ॥ मणिकर्ण्यां ततः

राम:
१६

स्नात्वागच्छेद्विश्वेश्वरं प्रभो॥६४॥नमस्कृत्य महेशानं प्रविशेद्देवसन्निधौ॥ पंचोपचारैः संपूज्य स्तुत्वा न
त्वा पुनः पुनः॥६५॥मुक्तिमंडपमागत्य कृतार्थस्तत्र संविशेत्॥विष्णुं च दंडपाणिं च ढुंढिं भैरवमेव च॥६६॥आ
दित्यं पंच गणपान् पूजयेत्पुनरेव च॥ प्रदक्षिणीकृतान् देवान्स्मरेत्तत्र क्रमात्सुधीः॥६७॥जय विश्वेश विश्वा
त्मन् काशीनाथ जगद्गुरो॥त्वत्प्रसादान्महादेव कृता क्षेत्रप्रदक्षिणा॥६८॥अनेकजन्मपापानि कृतानि मम
शंकर॥ गतानि पंचक्रोशात्मलिंगसम्यक्प्रदक्षिणात्॥६९॥त्वद्भक्तिः काशिवासश्च रहिता पापकर्मणा॥
सत्संगश्रवणाद्यैश्च कालो गच्छतु नः सदा॥७०॥हर शंभो महादेव सर्वज्ञ सुखदायक॥ प्रायश्चित्तं मुनिर्दि
ष्टं पापानां त्वत्प्रसादतः॥७१॥पुनः पापमतिर्मास्तु धर्मबुद्धिः सदास्तु मे॥इति जप्त्वा यथाशक्त्या दत्त्वा दानं द्वि
जन्मनां॥७२॥बध्वा करपुटं यात्री मंत्रमेतमुदीरयेत्॥ पंचक्रोशस्य यात्रेयं यथावद्या मया कृता॥७३॥न्यू
नं संपूर्णतां यातु त्वत्प्रसादादुमापते॥ इति प्रार्थ्य महादेवं गच्छेद्गेहं स्वकं स्वकं॥७४॥ न्यूनातिरिक्तदोषाणां परि
हाराय दक्षिणां॥ संकल्प्यागत्य च गृहं ब्राह्मणान् भोजयेत्ततः॥७५॥ तत आगत्य च गृहे कुटुंबैः सह भो

जनं॥ कृत्वात्मानं ततो ध्यात्वा कृतकृत्यो भवेत्ततः॥ ७६॥ एकरात्रं तु मध्ये यः प्रवशे च्छुचि मानसः॥ वरुणा
यास्तटे स्म्येस याति परमां गतिं॥ ७७॥ द्विरात्रिं वसतिं मध्ये यः कुर्याद्धर्मतत्परः॥ प्रथमं चंडिकाक्षेत्रे द्वितीयं व
रुणा तटे॥ ७८॥ दिवसं तु वसेद्धीमान् ततो विश्वेश्वरं व्रजेत्॥ यस्तु त्रिरात्रमुषितो मध्ये भवति पार्वति॥ ७९॥
दुर्गास्थले भीमचंड्यां रामेशे वासमृच्छति॥ वसतिं यस्तु कुरुते मध्ये दिनचतुष्टयं॥ ८०॥ प्रथमां वसतिं कुर्या
त्कर्दमेश्वरसन्निधौ॥ द्वितीयां भीमचंड्यां तु रामेशं तु तृतीयकं॥ ८१॥ चतुर्थी कापिले क्षेत्रे वसतिं प्रतिकल्पये
त्॥ राजवृद्धकुमाराणां यथेष्टं वासमिष्यते॥ ८२॥ यथा कथंचिद्देवेशि पंचक्रोशप्रदक्षिणं॥ कुर्याद्देवनमास्ता
दिचिंतयेद्धर्मकोविदः॥ ८३॥ स एव शुभदः कालो यत्र श्रद्धोदयो भवेत्॥ श्रद्धा हि दुर्लभा लोके कलौ खलु
विशेषतः॥ ८४॥ श्रद्धैव तीर्थं देवाश्च श्रद्धा स्वर्गापवर्गकौ॥ श्रद्धया यत्कृतं सर्वमनंतफलदं भवेत्॥ ८५॥
सत्ये श्रद्धा गुणवती नास त्येसा फलप्रदा॥ काश्यां वसति यो नित्यं स्नाति भागीरथीजले॥ ८६॥ कुर्यात्सांव
त्सरीं यात्रां पंचक्रोशस्य सुंदरि॥ स ब्रह्मभूतो निवसन्मानुग्रहतः सुखी॥ ८७॥ इति श्री ब्रह्मवैवर्ते पंच

क्रोशीमाहात्म्ये चतुर्थोध्यायः॥४॥ ॥देव्युवाच॥ क्षेत्रप्रदक्षिणे देवनियमाः के भवंति नाथ॥ वद सर्वं नारि
नाशेष विश्वनाथ कृपालय॥१॥ महादेव उवाच॥ प्रतिग्रहं परान्नं च परदाराभिभाषणं॥ परस्वग्रहणं स्नेह
दुःसद्वार्ता च वर्जयेत्॥२॥ असतां पापिनां संगं न कुर्यात्प्रयतो नरः॥ असत्समागमात्सर्वं निष्फलं जायते नृ
णां॥३॥ मम द्रोहपरैः साकं न व्रजेद्विष्णुनिंदकैः॥ परापवादं नो कुर्यान्न परद्रोहं च वर्जयेत्॥४॥ गुरुनिंदां
शास्त्रनिंदां शिव धर्म महात्मनां॥ तीर्थलिंगं नयोर्निंदां न कुर्यात्तु प्रदक्षिणे॥५॥ अन्यदा तु कृतं पापं न
श्यते क्षेत्रप्रदक्षिणात्॥ पापं प्रदक्षिणामध्ये कृतं केन प्रणाश्यते॥६॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च
वान्यजातिभिः॥ कांक्षिभिः परमं नत्वं कर्तव्यं क्षेत्रदक्षिणं॥७॥ किंचिद्दानं प्रत्यहं ब्राह्मणेभ्यो देयं दीनाना
थपंग्वंधकेषु॥ भूमौ शय्या तैलमांसादिदुष्टं सर्वं वर्ज्यं तीर्थयात्रादिनेषु॥८॥ स्नानद्वयं प्रकुर्वीत नित्यं श्रा
द्धं च सुंदरि॥ यदत्र किंचित्क्रियते कोटिकोटिगुणं भवेत्॥९॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थोथ मस्करी॥
क्षेत्रे वसन्बहिर्वापि कुर्यादेव प्रदक्षिणं॥१०॥ ब्रह्महत्यादिपापानां प्रायश्चित्तं न चापरं॥ बहिःकृतानां

पापानां मध्ये वापि सुरेश्वरि ॥ ११ ॥ प्रायश्चित्तांतरं पुंसो न दृष्टं न मया श्रुतं ॥ वसंति देवा बहवः स्वर्गभूमौ न
हि सदा ॥ १२ ॥ मदाज्ञां पालयंत्येव वासार्थं देव्य मागताः ॥ बहिः स्थिताः प्रकुर्वंति दक्षिणं क्षेत्रलब्धये ॥ १३ ॥
ममानुग्रहमासाद्य प्रविशंति हि काशिकां ॥ मदनुग्रहकामैश्च पंचक्रोशात्मकं प्रिये ॥ १४ ॥ लिंगं प्रदक्षिणीकृ
त्य दृष्टव्योहं कृपानिधिः ॥ अस्मिन् क्षेत्रे महादेवि पुण्यं पुण्यतरं तु वा ॥ १५ ॥ अनंतकोटिगुणितं भवत्येव न सं
शयः ॥ अंतर्गृहे कृतं पापं केवलं पातनावहं ॥ १६ ॥ अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ॥ पुण्यक्षेत्रे कृ
तं पापं गंगातीरे विनश्यति ॥ १७ ॥ गंगातीरे कृतं पापं वाराणस्यां विनश्यति ॥ वाराणस्यां कृतं पापमंतर्गृहे ॥
विनश्यति ॥ १८ ॥ अंतर्गृहे कृतं पापं वज्रलेपो भविष्यति ॥ वज्रलेपच्छिदं ह्येतत्पंचक्रोशप्रदक्षिणं ॥ १९ ॥
तस्मात्सर्वप्रयत्नेन कुर्यात्क्षेत्रप्रदक्षिणं ॥ वाराणसीं तु संप्राप्य प्रमादाद्यो बहिर्गतः ॥ २० ॥ दैवात्स पुनरागत्य
दक्षिणेन प्रशुद्ध्यति ॥ अविमुक्तं महाक्षेत्रं सर्वदा जननी यथा ॥ २१ ॥ पुत्रस्य जननी लोके सर्वथा हि
न कारिणी ॥ हितकृत्सर्वजंतूनां काशी हाम्रत्र सर्वदा ॥ २२ ॥ देव्युवाच ॥ भगवन् सर्वभूतेश कृपापूरित

विग्रह॥ कृतार्थानां वद विभो क्षेत्रसंन्यासिनामपि॥२३॥ प्रदक्षिणक्रमं क्षेत्राद्बहिर्वा मध्यतोपि वा॥ नि
यमस्य न भंगः स्याद्यथा पापं च नश्यति॥२४॥ देहिनां पापसंबंधः सर्वथा जायते क्रमात्॥ तत्काशिवास
जं नश्येत् क्षेत्रसंन्यासिनां यथा॥२५॥ श्रीभगवानुवाच॥ सम्यक् पृष्टं त्वया देवि महाहंकारनाशनं॥ प्रायश्चि
त्तं न्यासिनां हि क्षेत्राघौघविनाशनं॥२६॥ विधिस्तु पूर्वमेवोक्तो नियमादिषु तत्तव॥ प्रदक्षिणक्रमं तेषामव
धारय सुव्रते॥२७॥ स्नात्वा देवं समभ्यर्च्य विश्वेशं विश्वपावनं॥ मोदादिपंचकं ढुंढिं दंडपाणिं च भैरवं॥२८
॥ पूर्ववत्तीरगान् पूज्य दुर्गां पूज्य च यत्नतः॥ बहिरावरणं यत्का गणेशानां च सप्तमं॥२९॥ मध्ये प्रदक्षिणं कु
र्यादक्षीवरुणयोः कृती॥ सन्मुखीभूय विधिवत् पूज्या ये वामतः स्थिताः॥३०॥ देवा देव्यश्च फलदाः क्षेत्रपा
लाः प्रयत्नतः॥ एकरात्रं द्विरात्रं वा तत्क्षेत्रमध्ये त्रिरात्रकं॥३१॥ यत्र स्याद्वा सुमहती वसेत्तत्र न संशयः॥ प्र
त्यहं दंडपाणेस्तु पूजा कार्या प्रयत्नतः॥३२॥ दंडपाणेः पूजनेन सिद्धा भवति नान्यथा॥ दंडपाणे यक्षपते
क्षेत्रसंन्यासिवल्लभ॥३३॥ पंचक्रोशस्य यात्रेयं सिद्धास्त्वत्प्रसादतः॥ अनेन श्लोकमंत्रेण प्रार्थना पूजनं

पं.मा. १९

स्मृतं॥३४॥ प्रत्यहं कुर्वता यात्रा संपूर्णा भवति ध्रुवं॥ आगत्य विश्वनाथस्य पूजा कार्यानुपूर्वेण तु॥३५॥ देव्यु
वाच॥ प्रत्यहं दंडपाणेस्तु पूजा प्रोक्ता विशेषतः॥ किमेतद्देवदेवेश यात्रामुद्दिश्य शंकर॥३६॥ महादेव उवा
च॥ काशीं प्राप्य बहिर्नैव गच्छेत्सर्वात्मना क्वचित्॥ मनुष्यत्वं समागम्य क्षेत्रसंन्यासकृत्तमः॥३७॥ दंडपा
णिः सभवत्तदारभ्य वरानने॥ पुनः कालांतरे देवि कृपिभिर्नारदादिभिः॥३८॥ एष्टोहं क्षेत्रजनितपापना
शनमुत्तमं॥ सदा सुदुर्लभं देवि प्राप्यास्मिंस्तत्तदा महत्॥३९॥ उपदिष्टं महालिंगप्रदक्षिणमशेषतः॥ तत्कृ
त्वा दृष्टवान् दंडपाणिः क्षेत्रपरायणः॥४०॥ तदा मयोपदिष्टोसौ महापाशुपतव्रतो॥ क्षेत्रयात्रा द्विती
येयं मयोक्ता दंडपाणये॥४१॥ अतो दंडपतेः पूजा कर्तव्या पूर्तिकारिणी॥ पंचक्रोशात्मकस्यैव लिंग
स्य परमात्मनः॥४२॥ प्रदक्षिणमिदं कृत्वा जीवन्मुक्तो भवेन्नरः॥ देव्युवाच॥ ज्ञात्वापि श्रद्धया देव न कु
र्वंति प्रदक्षिणं॥४३॥ तत्केन हेतुना मर्त्या उपेक्षंते महाफलं॥ महादेव उवाच॥ श्रद्धा पुण्यवतां देवी न
पांडित्यादिभिः श्रमा॥४४॥ तस्माद्धर्मे प्रयततां सिध्येत्सर्वं न चान्यतः॥ पत्रपत्र परिरज्यते जनस्तत्रत

रामः १९

त्र्सुखमेधते पुनः॥४५॥ साधनानि विरधाति तत्परोपेन न तत्फलमवाप्नुयान्नरः॥ लौकिके परमवैदिके थ
वा पामरः परमतत्ववित्तथा॥४६॥ मादकः परं ममोदको यथा दीपनेक पर भार्यया पयथा॥ मोहितो न च वि
चारयत्ययं जीवनं मरणमप्यहो वशी॥४७॥ एवमेकं कालकूटं इंद्रियं सर्वनाशकृत्॥ तदेव शोधितं यद्वद्वि
षमप्यमृतं भवेत्॥४८॥ जगत्तृणीकृत्य सकालमत्यं आत्मानमापोत्यशिवेन योगैः॥ अविघ्नमेवं स्वमलं
विसृज्य शरीर संज्ञं मलखंड भांडं॥४९॥ मुक्तो भवेदेष न चान्यथैवमर्त्यः प्रसादान्मम चैव मुक्तः॥ कः कर्तुमेवं
प्रभवत्यविघ्नं कलौ मनुष्यो बहुदोषयुक्तः॥५०॥ अथापि मद्भक्तियुतो विमुक्तस्त्वद्भक्तियुक्तः सकलेश्च भा
वैः॥ पूर्वोदितात्प्यतिदुःशकोयं विमोहनार्थैरखिलैश्च शास्त्रैः॥५१॥ वीभत्सितेदु विषयेकदाचिद्यो॥
वातुरागो भविता नरस्य॥ स चेद्भविष्यत्परमात्मनीशे को नाम मुक्तो न भवेद्भवाब्धेः॥५२॥ अविमुक्तं मम
क्षेत्रं अविमुक्तेश्वरं शिवं॥ अविमुक्तजनं शांतं सेवंते ये धृतव्रताः॥५३॥ विमुक्ताः परमानंदे पदे स्थितिमु
पागताः ॥ अनेक जन्म सुमहत्साधनैर्ज्ञानमुत्तमं॥५४॥ प्राप्नुवंति न तदेकेन जन्मना साधुवासिनः॥ ॥

अष्टांगादिभिरन्यैश्च तपोयज्ञादिभिः सदा॥५५॥ साधिते पाऽस्मिंको सिद्धिरविमुक्ते निरर्गला॥ अविमुक्ता
त्परो योगो ज्ञानं दानं जपस्तपः॥५६॥ क्षेत्रतीर्थादिनियमान् संति शुभदर्शिनां॥ अविमुक्तं समासाद्य न
त्यजेन्मोक्षकामुकः॥५७॥ क्षेत्रन्यासदृढं कृत्वा वसेद्धर्मपरः सदा॥ क्षेत्रन्यासपराणां तु महद्भ्यनुकूलजैः
॥५८॥ भोगैः सहापदं नां यातौ दिशावः परमां गतिं॥ यथा पतिव्रता नारी भर्तारमनुगच्छति॥५९॥ तथा स
ह समालंब्य काशीमनुगतो भवेत्॥ गुरुद्रोहपरो यस्तु विप्रद्रोहपरस्तथा॥६०॥ न तस्य काशी सिध्येत
बहुभिः साधनैर्युता॥ क्षेत्रसन्यासिनामेवं क्रमः प्रोक्तो मयानघ॥ ६१॥ प्रदक्षिणा यास्तु महान्महापा
पहरः परः॥६२॥ इति श्रीब्रह्मवैवर्ते महापुराणे त्रतीयविभागे पंचक्रोशीमहिमावर्णनं नाम पंचमो
ध्यायः॥५॥ समाप्तः॥ ॥ ॥ ॥ ॥

श्रीकाशीविश्वनाथपुरीमेंमहल्लाछोटकीपिअरीपर बाबूकौलेश्वरसिंहकेमकानमेंबाबूकिशुनदयालसिंहकेगनेसप्रभाकरछापाखानेमे श्रीपंचक्रोशीमाहात्म्य छापागया जिस्कोलेनाहो पसोनईसडकपरबाबूकौलेश्वरसिंहकेदुकानपरमिलैगा सोधावालशास्त्रीप्रभुणेनेबहुत शुद्ध॥ सम्वत् १९४३॥मार्ग॰शु॰४

इतिश्रीपञ्चक्रोशीमाहात्म्यंसमाप्तम्